श्रीः ।

# धर्मप्रदीपः

( धर्मशास्त्रीयप्रमाणसंबद्धद्वादशमासीय-
तिथ्यादिनिर्णयग्रन्थः )

विद्वद्वरश्रीभैरवदत्तपण्डितविरचितः ।
खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनय-
गोविन्दशास्त्रिणा संशोध्य परिष्कृतः ।





सोऽयं ग्रन्थः
खेमराज श्रीकृष्णदासश्रेष्ठिना
मुम्बय्यां
स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये
मुद्रयित्वा प्रकाशितः ।

शके १८२२, संवत् १९५८, सन् १९०१.




# प्रस्तावना ।



भवत्विदं सुविदितं सकलवैदिकसद्धर्मावलम्बिसज्जनेषु समस्तश्रौतस्मार्तसद्धर्मकर्मसमाचरणकृतार्थीकृतधरित्रीवलयेषु श्रीमत्सु धर्मशास्त्ररहस्यपारावारपारीणेषु पण्डितमण्डलाखण्डलायमानेषु विद्वज्जनेषु सदाचारसम्पन्नेषु सद्गृहस्थेषु च। चतुर्विधपुरुषार्थप्रधानभूतो धर्म एव, सच सदाचारप्रभवः, स सदाचारश्चाचार्यपरम्पराप्राप्तश्रौतस्मार्तकर्मानुष्ठानरूपः। यत एवामनन्त्याचार्यलक्षणम्-" आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि । स्वयमाचरते चैव तस्मादाचार्य उच्यते ॥" इति। एवं चाचार्यपरम्पराप्राप्तश्रौतस्मार्तकर्मणां देशभेदविशेषतः प्रायो बहुत्रापि सम्मततमाचारविभेदं पश्यद्भिर्हेमाद्र्यादिभिः सर्वाचार्यमतमतान्तरावगाहनपुरःसरधर्मशास्त्रीयमहानिबन्धाः प्राणीयन्त। तेच सर्वजनोपकारकाः सन्ति। यदनुसारेण वयं भारतीया वैदिकधर्मावलम्बिनःस्वस्वधर्मकर्माणि निर्वर्तयामः। एवं सत्सु महानिबन्धेषु ग्रन्थगौरववशेन सन्दिग्धावश्यकीयधर्मकर्मकालप्रभृतीतिकर्तव्यपर्यालोचनपरिश्रमावर्तनिमग्नयथाश्रुतप्रमाणग्राहिसद्धर्मशास्त्रपरिशोधनप्रयतमानसाधारणप्रज्ञानां यथार्थमहामहानिबन्धार्थपरिज्ञानसौलभ्यार्थं प्रयतमानैरनेकैर्नानाविधमहानिबन्धपारावारपारदृश्वभिर्बहुभिर्महापण्डितैर्बहवो ग्रन्था महानिबन्धसारमादाय विरचिताः सन्ति । ते च प्रायः कर्तव्यधर्मकर्मकालादिनिर्णयं बोधयन्तो निर्वाहयन्ति सदाचारं यतस्तत इति सुप्रसिद्धम् ।

तत्रापि चावेदनीयोऽयं विषयः-सर्वसाधारणानां सद्धर्मश्रद्धालूनां भव्यभावुकजनानां ग्रहणकाल-संक्रान्तिकाल-श्राद्धकाल-आशौचकाल गुरुशुक्रास्तयूद्धत्वविचार-तिथिवेधनिर्णय-उपवास-निर्णयनक्तनिर्णय-दानव्रतनक्षत्राद्युपवास-एकादश्युपवासनिर्णय-प्रभृतिविषयकसप्रमाणनिर्णयपूर्वकं-चैत्रमारभ्य यावत्फाल्गुनं द्वादशमासीयतिथिनिर्णयपुरःसरं कर्तव्यधर्मकर्मनिर्णयस्य स्पष्टतया प्रतिपत्तये धर्मशास्त्रीयप्रमाणोपनिबद्धः कोऽपि धर्मशास्त्रग्रन्थः सरलोऽपि स्वल्पोऽप्युपयोगी भवत्विति मनसि कुर्वद्भिर्महामहैःश्रीभैरवदत्तपण्डितैरिमं "धर्मप्रदीप"नामानंयथार्थनामानं ग्रन्थं विरच्य एवैषां वैदिकधर्मावलम्बिनामुपरि महानेवोपकारोऽकारि। अयं च ग्रन्थोऽनेकविधपुरातनमहानिबन्धस्यप्रमाणपरिपुष्टतया यथार्थशास्त्रार्थं प्रकाशयतीति सत्यमस्य यथार्थं नाम-"धर्मप्रदीप" इति ।

## प्रस्तावना ।

अयं च ग्रन्थोऽद्यावधि कुत्रापि नामुद्यतातोऽ लभ्यपदवीमेवाश्रित आसीदतोऽस्माभिरस्य ग्रन्थस्य शास्त्रिजनद्वारा सम्यक्परिशोधनं कारयित्वा प्रमाण-प्रमेयादिविवेचनप्रभृतिमुद्रणोपयुक्तव्यवस्थया च परिष्कार्य स्वकीये 'श्रीवेङ्कटेश्वर' मुद्रायन्त्रालये मुद्रयित्वा प्रसिद्धिमानीयत ।

विज्ञापयामः सर्वान्सज्जनान्-अयं प्रदीपवद्धर्मशास्त्रार्थप्रदर्शको "धर्मप्रदीप" नामा ग्रन्थः सर्वथा संग्रहणीयतामर्हत्येवेत्यवश्यं संगृह्य श्रीमद्ग्रन्थकाराणां परिश्रमःकृतार्थीक्रियतामिति ।

सकलसज्जनसद्गुणप्रेमाभिलाषी-

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणयन्त्रालयाधीश-मुंबई.



श्रीः ।

# अथ धर्मप्रदीपस्थविषयानुक्रमणिका प्रारभ्यते ।

## अथाशौचकालनिर्णयः ।

| विषयाः. | पृष्ठम्. |
| --- | --- |

## अथश्रावणशुक्लपक्षीयप्रति:पदादितिथिनिर्णयः



## अथभाद्रकृष्णपक्षीयप्रतिपदादितिथिनिर्णयः ।



| विषयाः. | पृष्ठम्. |
| --- | --- |

## अथभाद्रपदशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः ।



## अथाश्विनकृष्णपक्षीयप्रतिपदादितिथिनिर्णयः ।

इति धर्मप्रदीपस्थविषयानुक्रमणिकासमाप्ता।

॥ श्रीः ॥

# अथ धर्म्मप्रदीपः

## प्रारभ्यते ।



श्रीमन्मङ्गलमूर्त्तये नमः ।

सिन्दूरकाश्मीरजरञ्जितश्शयो
यस्यामलेन्दीवरकान्तिसोदरः ॥
देवेन्द्रहस्तीन्द्रसमानशोभया—
पृक्तः स शैवोस्तुतरां शिवाय नः ॥ १ ॥

किञ्च—

दातुं चतुर्वर्ग्गमसौ चतुर्दा—
स्स्वासाम्यमाख्यातुमिवैकदन्तः ॥
विघ्नान्धकारोष्णमयूखमाली
तन्याच्छिवं नः स गणाधिशाली ॥ २ ॥

भोमेलेशान्समोमेलांश्चतुर्वर्ग्गफलप्रदान् ।
विश्वविश्वजनीनेनानन्तरायनुदे नुमः ॥ ३ ॥

शन्देहं भजतां वन्देऽभरवंथपदाम्बुजम् ।
मन्देहदेहसन्देहं त्रयीमूर्तिं तमोनुदे ॥ ४ ॥

धीर्द्दीवर्त्ति सिन्धुजा सद्विचार—
स्नेहं गौरी दिष्टसद्दोधतेजः ॥

दयायाचे धर्मदीपे सदैवै
देवैरिवं स्तादयं सुप्रकाशः ॥ ५ ॥
ये कालसिद्धान्तितशास्त्रहीना
ये चाऽक्षमास्तत्सुविचारणायाम् ॥
तेषां कृते भैरवदत्तशर्म्मा
धर्म्मप्रदीपं प्रकटीकरोति ॥ ६ ॥

---

## अथ प्रकीर्णकनिर्णयः ।

### तत्र ग्रहणकालनिर्णयः ।

तत्र यस्मिन् यामेऽर्कग्रहणं ततः पूर्वं प्रहरचतुष्टयं,चन्द्रग्रहे तु प्रहरत्रयं न भुञ्जीत ।

"सूर्य्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विना ॥"
इति माधवीये 'वृद्धगौतमोक्तेः । 'ग्रहणं तु भवेदि'
त्यादिमार्कण्डेयोक्तेश्च ॥

ग्रस्तोदये ग्रस्तास्ते विशेषमाहतुर्माधवीये वृद्धवसिष्ठव्यासौ—
"अस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ।
अमुक्तयोरस्तगयोरद्याद्दृष्ट्वा परेहनि ॥"—इति ।

विष्णुधर्म्मेपि—
"अहोरात्रं न भोक्तव्यं चन्द्रसूर्यग्रहो यदा ।
मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम् ॥"
सायंसन्ध्यायां सूर्यस्य ग्रस्तास्ते पूर्वेऽह्नि रात्रौ च न भो·

क्तव्यं प्रातस्सन्ध्यायामिन्दोर्ग्रस्तास्ते पूर्वरात्रावुत्तरेह्नि च न भोक्तव्यं 'सन्ध्याकाल' इत्यादिगार्ग्योक्तेः ॥

चन्द्रग्रस्तास्ते उत्तरदिने सन्ध्याहोमादौ न दोषः, 'ग्रस्त' इत्याद्युशनस उक्तेः।आहिताग्नेर्न दोषोऽनाहिताग्नेस्तु दोष एव॥ बालवृद्धातुराणां तु ग्रहणकालात्पूर्वमेकयामो निषिद्धः ।

"सायाह्ने ग्रहणं चेत्स्यादपराह्ने न भोजनम् ।
अपराह्ने न मध्याह्ने मध्याह्ने न तु सङ्गवे ॥
भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भोजनक्रिया ॥"

इति मार्कण्डेयोक्तेः।वेधकाले ग्रहणेवा पक्वमन्नं त्याज्यम्॥ 'सर्वेषाम्' इत्यादि हेमाद्रौ षट्त्रिंशन्मतात् । भार्गवार्चनदीपिकायां विशेषमाह मेधातिथिः—

"आरनालं पयस्तक्रं दधि स्नेहादिपाचितम् ।
मणिकस्थोदकं चैव न दुष्येद्राहुसूतके ॥"

मन्वर्थमुक्तावल्याम्—

अन्नं पक्वमिह त्याज्यं स्नानं सवसनं ग्रहे ।
वारितक्रारनालादि तिलदर्भैर्न दुष्यति ।

जले त्वदोषो गाङ्गविषयः । "ग्रहोषितं जलं पीत्वा पादकृच्छ्रं समाचरेत्"इतिचतुर्विंशतिमतेऽन्यजलस्य दोषोक्तेः॥ वेधकाले ग्रहणे वा समर्थस्य भोजने प्रायश्चित्तमुक्तं माधवीये कात्यायनेन—

"चंद्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुध्यति" इति

ग्रहणे च त्रिरात्रमेकरात्रं वोपवासः श्रेयोर्थिना कार्यः। 'एकरात्रमि'त्यादिश्लोकद्वयेन लैङ्गोक्तेः। इदञ्च पुत्रपतिरिक्तविषयम्—

"आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः।
पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही॥"
इति जैमिनिवचनात्।

यदा तु रवेर्ग्रस्तास्तस्तदा पुत्रिणः प्रहरद्वयं हित्वा बालादिवद्भोजनं, नतूपवासः 'सायाह्ने ग्रहणमि'ति पूर्वोक्तमार्कण्डेयवचनात्। माधवेन तु पुत्रिणोऽपि तत्रोपवास एवोक्तः। मदनरत्नेऽप्येवम्। वर्द्धमानस्तु 'अहोरात्रं न भोक्तव्यम्' इति। शातातपीये "सूर्याचन्द्रमसोर्लोकानक्षयान्याति मानवः" इति फलश्रुतेर्मुक्त्यदर्शने उपवासः काम्यो न त्वयं निषेध इत्याह। तन्न। व्रतत्वेपि विष्णुधर्मे निषेधाऽवश्यंभावोपलब्धेः।

तथा व्यासेनात्र योगविशेषे फलविशेष उक्तः—
"रविग्रहः सूर्यवारे सोमे सोमग्रहस्तथा।
चूडामणिरिति ख्यातस्तत्र दत्तमनन्तकम्॥
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः।
तत्पुण्यं कोटिगुणितं योगे चूडामणौ स्मृतम्॥"
अत्र चाद्यन्तयोः स्नानं कुर्यात्।

"ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते ।
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ॥"

इति हेमाद्रौ वचनात्,स्नानं स्यादित्यादिब्रह्मवैवर्ताच्च, 'सर्वेषाम्' इत्यादि वृद्धवसिष्ठोक्तेश्च।सचैलं मुक्तिस्नानपरमिति मदनरत्न उक्तम् ।भार्गवार्चनदीपिकायां चतुर्विंशतिमते–

"मुक्तौ स्नानं सचैलं यो न कुर्याद्ग्रहसूतके ।
स सूतकी भवेत्तावद्यावत्स्यादपरो ग्रहः ॥"

इदञ्च स्नानममन्त्रकं कार्यमिति स्मृतिरत्नावल्याम् । ग्रहे तीर्थविशेषो भारते 'गङ्गे' त्यादिनोक्तः । महानदीष्वपि मासविशेषे काश्चिच्छेष्ठा उक्ता हेमाद्रौ । 'इन्दोर्लक्षे' ति फलाधिक्यं व्यासेनोक्तम् । तीर्थालाभे तु माधवीये शङ्खेन वाप्यादिषु स्नानमुक्तमातुरस्योष्णोदकस्नानञ्च ॥

प्रभासखण्डे तीर्थस्नानादपि समुद्रस्नानस्य फलमधिकमुक्तम् । मार्कण्डेयेन तत्तत्तीर्थासम्भवे तु तत्तत्तीर्थस्मरणमपि पुण्यमुक्तम् । अत्र ऋष्यशृङ्गेण श्राद्धमुक्तमामान्नेन हेम्ना वा, तदकरणेऽनिष्टञ्च । अपरार्के अत्र द्विजानां पाकश्राद्धमुक्तं, श्राद्धकर्तुः पुण्यं, भोक्तुरपुण्यं च । किञ्चात्र गोभिलेनामान्नेन हेम्ना वा वार्षिकश्राद्धमुक्तम् । अत्राशौचमध्येपि स्मार्तकर्म्माऽपरित्यागो मन्त्रदीक्षादिश्चोक्तः । पात्रान्तरिततोयेन रजस्वलास्नानादि च माधवीये मिताक्षरादौ च ।

देवलेन चन्द्रग्रहे रात्रौ स्नानं दानं च प्रशस्तमुक्तम्। यदा तु ज्योतिश्शास्त्रेण दिने चन्द्रग्रहो रात्रौ च सूर्यग्रहस्तदा स्नानादिनिषेध उक्तः। अत्र रामगोपालादिमन्त्रदीक्षोक्ता, सा चार्कग्रह एव न चन्द्रग्रहे। जन्मर्क्षादौ ग्रहेऽनिष्टफलं तद्वा-न्शान्त्यादि च हेमाद्रावुक्तम्। किञ्चात्र ब्रह्मसिद्धान्ते दर्श-ने विशेष उक्तः—

"सर्वैः पटस्थितं वीक्ष्यं खस्थं तैलाम्बुदर्पणे।
ग्रहणं गुर्विणी जातु न पश्येत पटं विना"—इति॥

तथा मङ्गलकृत्येषु तत्र त्याज्यदिनान्युक्तानि हेमाद्रौ।

"त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम्।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः॥"

प्रकारान्तरञ्च तत्रैवोक्तम्—

"द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः॥"

इदं पूर्णग्रासे। 'त्र्यहं खण्डग्रहे तयोरि'ति तत्रैवोक्तेः।

वशिष्ठेन तु—

"सर्वग्रासे दिनान्यष्टौ सर्वकार्येषु वर्जयेत्॥
षड् दिनानि त्रिभागोने अर्द्धग्रासे चतुर्दिनम्।
चतुर्थांशे त्रिरात्रं स्याद्ग्रहणे चन्द्रसूर्ययोः" इत्युक्तम्॥

अङ्गिरास्तु—

"सर्वग्रासे तु सप्ताहमर्द्धग्रासे दिनत्रयम्।
त्रिद्व्येकाङ्गुलतो ग्रासे दिनमेकन्तु वर्जयेत्॥"

इत्याह ॥ एवमेतेषां पक्षाणां विषयव्यवस्था देशभेदेनाचारभेदादवगन्तव्या।

अत्रापि ग्रस्तास्तगे पूर्वं त्रिदिनं नेष्टमर्थादग्रेतनानि दिनानि शुभानि। तथा ग्रस्तोदये परस्तात्पश्चात्त्रिदिनं नेष्टं पूर्वं दिनत्रयं शुभम्। तथाऽर्द्धखण्डे ग्रस्तास्तग्रस्तोदययोरभावेऽपि अर्द्धग्रासे बिम्बमानादर्द्धग्रासे उभयोः कालयोःप्राक्पश्चात्त्रिदिनं नेष्टम्। यदाह पीयूषधारायां गुरुः—

"ग्रस्तास्ते त्रिदिनं पूर्वं परं ग्रस्तोदये तथा।
खण्डग्रासे दिनं त्रि त्रि निश्शेषे सप्त सप्त च॥"

इति। अत्र निश्शेषे सप्त दिनानि पूर्वं सप्त च ग्रहणानन्तरं ग्रहणदिनं चेति पक्षो निषिद्ध उक्तः कैश्चित्। स च तन्नोत्पाताऽपाते बोध्यः। अतःखण्डग्रासादिसद्भावेपि ग्रस्तोदयग्रस्तास्तत्वाभावात्पूर्वं पश्चाचोक्तदिनानि वर्ज्यानीति विषयविवेकः।

अथ ग्रहणानन्तरं ग्रासभेदेन ग्रहणीयनक्षत्रे मङ्गलनिषेधकालमाह गुरुः पीयूषधारायाम्—

"सर्वग्रासे तु षण्मासांस्त्रीन्मासांश्च दलग्रहे।
आपादग्रहणे धिष्ण्यं मासमेकं विवर्जयेत्"—इति॥

अथ नक्षत्रद्वये ग्रहणे तदुभयमपि निषिद्धं शार्ङ्गीयविवाहपटले पीयूषधारायाम्—

"यस्मिन्विधुं राहुरिनं च धिष्ण्ये
गृह्णाति तत्याज्यमृतुत्रयं स्यात्॥

पाणिग्रहे पुंमरणं विधत्ते
द्वयोर्भयोश्चिद्वयमेव जह्यात् ॥ ”

अथासन्नपक्षद्वयग्रहणे किं द्वयत्यागः षण्मासमुत कस्यचित्कश्चिद्विशेषस्तन्निर्णयश्च तत्रैव । पक्षान्तरेण ग्रहणद्वयं च यदा तदादिग्रहणोपगमम् ॥

“पश्चाद्विशुद्धं भवति द्वितीयं पाणिग्रहे शुध्यति भोगपङ्कात् ॥”

इति । अत्र मुहूर्तमार्तण्डकृता दिनभं लग्नभं च निषिद्धमुक्तम् । अत्र कार्यावश्यकत्वे परिहार उक्तो ज्योतिर्निबन्धे-

“पञ्च दिनानि वसिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम् ॥
यवनाचार्यस्य मतं पञ्च मुहूर्तांश्च दूषयति राहुः” इति ।

अत्रान्यानि चाग्नेयादिमण्डलादि तत्तत्फलं वर्णविकारादिफलञ्च ग्रन्थेषूक्तानि विस्तरभिया नोपन्यस्तानि ।

किञ्चात्र पुरश्चरणचन्द्रिकायां स्नानपूर्वकं स्पर्शादिमोक्षान्तं मन्त्रजप उक्तः तदुत्तरं तद्दशांशहोमतर्पणमार्जनब्राह्मणभोजनाद्युक्तं तदपि तथा । अत्र मेघाच्छादनेपि स्नानादि सर्वं विधेयमन्धादीनामपि सर्वं सचक्षुःपुरुषवद्बोध्यम् ।

इति ग्रहणनिर्णयः ।

---

## अथ संक्रान्तिनिर्णयः ।

तत्र ग्रहाणां प्राग्राशितोऽपरराशौ संक्रमणं संक्रान्तिः । सा च द्विविधा, मध्यमा स्पष्टा च । तत्र पद्मर्मसंस्कृतो मध्यमो ग्रहो राश्यन्तरं यदा संक्रामति सा मध्यमा । यदा तु स्पष्टाङ्-

तिसंस्कारविशिष्टो ग्रहो राश्यन्तरं गच्छेत्सा स्पष्टसंक्रांतिः । तत्र मध्यममानस्य स्पष्टीकरणार्थत्वादेव तज्जनितसंक्रान्त्यनुपयोगादत्रैतत्त्यागे स्पष्टसंक्रांतिरेव ग्राह्या । सापि द्विविधा । सायनांशा निरयणांशा चेति । तत्र यदा सिद्धान्तगणनागतायनांशसंस्कृता ग्रहा राश्यन्तरगमनमुररीकुर्वते सा सायनांशा। यदा त्वयनांशसंस्काररहिता ग्रहा राश्यन्तरगास्तदा सा निरयणांशोच्यते । तत्र तदुभयसंक्रांतिकालोपि मुख्यो गौणश्चेति द्विधा । तत्र—

"सुस्थे नरे सुखासीने यावत्स्पन्दति लोचनम् ।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः ॥
तस्माच्छततमो भागस्त्रुटिरित्यभिधीयते ।
त्रुटेः सहस्त्रभागो यः स कालो रविसंक्रमे ॥ "

इति देवीपुराणोक्तमुख्यकालस्य परस्परविसंवादिज्योतिस्सिद्धान्ताऽनवगमात्, कथञ्चित्तज्ज्ञानेपि बहुकालसाध्यश्राद्धादेस्तत्रानुष्ठानाऽसम्भवाच्च गौणकालो निर्णीयते। तत्र सायनांशसंक्रान्तेस्तावदुच्यते । तत्रायनांशसाधनं ज्योतिस्सिद्धान्तेभ्योऽवगन्तव्यम् ॥

ग्रहलाघवे तु—"वेदाब्ध्यब्ध्यूनः खरसहृतः शकोऽयनांशाः" इत्ययनांशाः साधिताः । तत्साधने मकरन्दीयो ग्रन्थस्तु ॥

"भूनेत्रवेदोनशकः स्वकीय—
दशांशहीनः खरसैर्विभक्तः ॥ "—

इति सूपलक्ष्यते ।

अथ सायनसंक्रान्तिकालसाधनमाह रामः–

"तथाऽयनांशाः खरसाहताश्च–
स्पष्टार्कगत्या विहृता दिनाद्यैः ।
मेषादितः प्राक्चलसंक्रमाः स्यु–
र्दाने जपादौ बहुपुण्यदास्ते"–इति ॥

यथा राशिसंक्रमा बहुपुण्यदास्तथा चलसंक्रमा इति तथाशब्दार्थः ।

वसिष्ठोपि–

"चलसंस्कृततिग्मांशोः संक्रमोऽयः ससंक्रमः ।
अजागलस्तन इव राशिसंक्रान्तिरुच्यते"–इति ॥

पुलस्त्योऽपि–

"अयनांशसंस्कृतो भानुर्गोले चरति सर्वदा ।
अमुष्या राशिसंक्रान्तिस्तुल्यः कालविधिस्तयोः ॥
स्नानदानजपश्राद्धव्रतहोमादिकर्मभिः ।
सुकृतं चलसंक्रान्तावक्षयं पुरुषोऽश्नुते"–इति ॥

दीपिकायां नारदोपि–

"संक्रान्तेः पुरतो भानुभुक्त्या यावद्भिरंशकैः ।
रवेरयनसंक्रान्तिस्तदा तद्राशिसंक्रमः"–इति ॥

एतदेवाभिप्रेत्य रत्नमालाकृदप्याह–

"यावद्भिरंशैरयनच्युतिः स्या–
त्तद्भोग्यकालेन दिवाकरस्य ।

च्युतिर्भवेद्विष्णुपदादिकानां
रहस्यमेतन्मुनिभिः प्रदिष्टम्"—इति ॥

रोमशसिद्धान्तेपि—

"दिनरात्रिप्रमाणानां निर्णयो नक्षसंक्रमात् ॥
यतः सकलकर्माणि पुण्योऽन्तश्चलसंक्रमः—"इति ॥

जाबालिनापि राशिसंक्रान्तिषु यथा पुण्यकालस्तथा सायनांशसंक्रान्तिष्वप्युक्तः। स च वक्ष्यमाणनिरयणसंक्रमपुण्यकालादवगन्तव्यः । मकरसंक्रमे तु विशेषः । तथाच—

"संक्रान्तिषु यथा कालस्तदीयेप्ययने तथा ।
अयने विंशतिः पूर्वा मकरे विंशतिः पराः"—इति ॥

अयने चलसंक्रमे । अत्र चलसंक्रमाख्ये मकरायणे पूर्वा विंशद्घटिकाः पुण्यकालः । मकरसंक्रान्तौ तु परा विंशतिर्घटिकाः पुण्यकालः । मकरव्यतिरिक्तैकादशचलसंक्रमेषु तत्तत्संक्रमवत्पुण्यकालो ज्ञेय इति माधवो व्याख्यदिति पीयूषधारा। अत्र चलसंक्रमसाधनश्लोके प्रागित्युपलक्षणम्। कदाचित्संक्रान्तिकालात् परतोपि अयनांशवशेन चलसंक्रमसंभवात्।

तथा चोक्तं वेदाङ्गज्योतिषे—

"प्रपद्येते श्रविष्ठादौ सूर्याचन्द्रमसावुदक् ।
सार्पार्द्धे दक्षिणार्कस्तु माघश्रावणयोः सदा"—इति ।

भास्कराचार्यस्तु—भचक्रस्य पश्चिमपरिवर्तनमसम्भाव्य

प्रागेव चलसंक्रममुररीकुरुते, धनिष्ठादाविति तु नायं दोषः चत्वारिंशत्कलाधिकपडंशोपेतदशराशिमितायनांशे धनिष्ठादावित्यस्यापि प्रागसम्भवदर्शनात् ।

ननु चैकस्यैव सूर्यस्यैकस्मिन्नेव राशौ राशिसंक्रमणं चलसंक्रमणं च कथं संभवति।कुतः स्वकक्षास्थिताकाशभागस्य द्वादशधा विभक्तस्य राशिरिति संज्ञा । तत्र रविमण्डलस्य तत्तद्राश्यादिमप्रदेशस्पर्शो राशिसंक्रम इत्युच्यते ।तस्मिन्नेव च राशौ चलसंक्रमस्तु कीदृश इति चेच्छृणु।ईश्वरेच्छालोकादृष्टवशतस्तत्तद्राश्यादिभागस्य सूर्यतेजस्सम्पर्कश्चलसंक्रमो मण्डलमध्यसंपर्कश्च राशिसंक्रम इति विषयविवेकः । तद्यथा— रथ्यायां प्राक् पश्चाच नीयमानस्य दीपस्याग्रे प्रभा यस्मिन्प्रदेशे गच्छति तस्मिन्नेव प्रदेशे क्षणान्तरेण दीपोपि गच्छति एवं सर्वेषामपि ग्रहाणां चलसंक्रमा द्रष्टव्या इति दिक् ।

## अथ निरयणांशसंक्रातिपुण्यकालो निर्णीयते ।

तत्र वारनक्षत्रयोगवशाद्धोरादिसंज्ञितसंक्रान्तीनां जातिपरत्वेन यच्छुभाशुभं फलं तत्तु नोक्तमिहानुपयोगाद्विस्तरभयाच्च ।

तथा दिनरात्रिप्रहरादिविभागेन यच्छुभाशुभफलं नारदकश्यपादिभिरुक्तं तदपि नोक्तमुक्तहेतुभ्याम् ।

किञ्च केवलशुभाशुभवारपरत्वेन केवलचन्द्राश्रितनक्षत्रपरत्वेन च यच्छुभाशुभफलमुक्तं वसिष्ठकश्यपाभ्यां तदपि नालेखि यथोक्तहेतुभ्याम् ॥

अन्यच्च जन्मर्क्षादिजातसंक्रान्तिसूचितं तत्तत्संक्रमणजात-वृष्ट्यादिसूचितं च शुभाशुभफलं तदशुभापनोदकशान्तिस्नान-मपि नोक्तमुक्तहेतुभ्यां, तत्तत्संक्रान्तिजातिलेपभक्ष्यवाह-नादिकं च।

## अथ पुण्यकालोपयोगिसंक्रान्तिसंज्ञा आह।

तत्र मकरकर्कटयोः सौम्ययाम्यायनसंज्ञे।तदाह नारदः— "सौम्ययाम्यायने नूनं भवतो मृगकर्किणोः"—इति।

अथावशिष्टानां दशसंक्रान्तीनां षडशीतिमखाद्याः संज्ञा उक्ता नारदेन—

"स्थिरभेष्वर्कसंक्रान्तिर्ज्ञेयं विष्णुपदाह्वयम्।
षडशीतिमखं ज्ञेयं द्विस्वभावेषु राशिषु॥

तुलाधराजयोर्ज्ञेयं विषुवत्सूर्यसंक्रमः"—इति॥
संज्ञाप्रयोजनमग्रे वक्ष्यामः।

## अथ सामान्यतः पुण्यकाल उच्यते।

"संक्रान्तिकालादुभयत्र नाडिका
पुण्या मताः षोडश षोडशोष्णगोः"—इति॥

गणितागतार्कसंक्रमकालात्पूर्वतः परतश्च षोडश घट्यः पुण्याः। यदाह पीयूषधारायां वशिष्ठः।

"दिनपतिसंक्रमणात्प्राक्षोडश नाड्यश्च पुण्यकालः सः।

परतः षोडश नाड्यः सर्वत्र स्नानदानकार्येषु"—इति ॥
ब्रह्मसिद्धान्तेपि—

"संक्रान्तेः प्राक्परस्ताच्च सार्द्धाः षोडश नाडिकाः ॥
त्रयस्त्रिंशत्संक्रमस्य पुण्याः सर्वस्य नाडिकाः"—इति ।

किञ्चायमर्थो वासनासिद्धः सूर्यसिद्धान्तेऽभिहितः—

"अर्कमानकलाः षष्ट्या गुणिता भुक्तिभाजिताः ।
तदर्द्धनाड्यः संक्रान्तेरर्वाक्पुण्यं तथा परे"—इति ॥

सिद्धान्तशिरोमणावपि—

षष्टिघ्नबिम्बं ग्रहभुक्तिभक्तं
संक्रान्तिनाड्योऽखिलधर्मकृत्ये ।
रवेस्तु ताः पुण्यतमा ग्रहःस्व—
संक्रान्तिगो मिश्रफलं विधत्ते ॥

वासना चेयं यदि ग्रहस्य स्पष्टगतितुल्यकलाभिरहोरात्र-मानरूपाः षष्टिर्घटिका लभ्यन्ते तदा ग्रहबिम्बकलाभिः कियत्य इति त्रैराशिकेन बिम्बकलानां षष्टिर्गुणको ग्रहभुक्तिर्भाजको निष्पन्न इत्यर्थः ।

एवं सर्वग्रहाणामपि संक्रान्तिः स्यात् । तत्र सामान्यतः सूर्यबिम्बं त्रयस्त्रिंशत्कलाग्रहणतह्रासवृद्धिभ्यां बिम्बस्यापि ह्रासवृद्धिसम्भवात् ॥ तदुक्तं सिद्धान्त एवात्र विस्तरभिया नालेखि मया ।

अत एव त्रिंशदेकत्रिंशद्द्वात्रिंशत्सार्द्धद्वात्रिंशत्त्रयस्त्रिंशदा-

दिभेदेन स्मृतिषु पुण्यकालघटिकाभिधानं स्पष्टीकृत्याभेदसम्भवाद्भिन्नं तदेवं सामान्यतः संक्रान्तिषु द्वात्रिंशद्घटिकारूपः पुण्यकालो निर्णीतः ॥ देवीपुराणे मन्दादिसंज्ञाभेदात्पुण्यकालविशेष एवोक्तः—

"द्विचतुः पञ्च सप्ताष्ट नव द्वादश एव च।
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम्"—इति।

स तु पुण्यातिशयप्रतिपादनपर इति माधवदीपिकाकारजस्मन्तभास्करकारा अवदन्॥ गोविन्दस्तु मन्दादिष्वयं विचारो न चारप्रयुक्तास्ववचनादित्याह।

अथ रात्रिसंक्रमे यद्यर्द्धरात्रात्प्राक् संक्रमस्तदा पूर्वदिनस्योत्तरार्द्धं पुण्यं, यद्यर्द्धरात्रादुपरि संक्रमस्तदोत्तरदिनस्य पूर्वार्द्धमेव पुण्यमुक्तं ब्रह्मसिद्धान्ते—

"भवनान्तं बिम्बमध्यं राज्यर्द्धात्प्रागुदेति चेत्।
स्नानदानादि मध्याह्नात्कुर्यादूर्ध्वं गते दिने॥
राज्यर्द्धादुपरि क्षेत्रं याति चेदन्यथाऽर्यमा।
अह्न्यागामिनि मध्याह्नात्पूर्वं स्नानादि पुण्यदम्॥"

भवनं राशिः। बिम्बमध्यं रवेः क्षेत्रं राशिः।

वृद्धवसिष्ठोऽपि—

"अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम्॥
रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः।

अर्द्धरात्रादधस्तस्मिन्मध्याह्नस्योपरिक्रिया ॥
ऊर्ध्वे संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥ "—इत्याह ।

ननु दिनसंक्रान्तिवद्रात्रावपि पुण्यकालसत्त्वात् रात्रौ स्नानादि कुतो न क्रियते यदर्थमयमुद्यम आरब्धः । उच्यते—

"रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ॥ "

इति सुमन्तुवाक्याद्रात्रौ स्नानादिनिषेधात्। यत्तु नैमित्तिकं ग्रहणादि प्रयुक्तं तद्भवत्येव ।

"नैमित्तिकं च कुर्वीत स्नानं दानं च रात्रिषु ॥"

इति सुमन्तुवाक्यशेषात् ।

अथार्द्धरात्रसंक्रमे मकरकर्कटयोश्च विशेषः ।

तत्रार्द्धरात्रशब्दो निशीथवाचकः । स च रात्रिद्वितीयप्रहरान्तिमपलवाच्छिन्नः ।

माधवमते तु द्वितीयप्रहरान्तिमैकघटी तृतीयप्रहरादिमैकघटिकेत्येवं घटिद्वयात्मकस्तत्र संक्रमे प्रागपरं दिनद्वयं पुण्यमुक्तं वृद्धवसिष्ठेन—

"पूर्णे चेदर्द्धरात्रे तु यदा संक्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ"—इति ॥

ब्रह्मसिद्धान्तेऽपि—

यद्यर्द्धरात्र एव स्यात्संपूर्णे संक्रमो रवेः ।
तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु ॥"—इति ।

अत्र दीपिकाकारेण तु तत्राभिन्नतिथौ पूर्वदिने भिन्नतिथौ परदिन उक्तम् ।

वसिष्ठवाक्ये 'मुक्त्वा मकरकर्कटौ' इत्युक्तं तत्र यदि सूर्योदयात्प्राक् पूर्वं कर्कसंक्रमस्तदा पूर्वदिन एव पुण्यकालो नोत्तरदिने। तथा यदि सूर्यास्तादनन्तरं मकरसंक्रमस्तदोत्तरदिन एव पुण्यकालो न पूर्वदिने ॥ तदाह वृद्धगार्ग्यः—

"यदास्तमयवेलायां मकरं याति भास्करः ।
प्रदोषे चार्द्धरात्रे वा स्नानं दानं परेऽहनि ॥
अर्द्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥"

इति। अस्तमयवेलाया इति पञ्चम्यन्तं पदम्। वाशब्द इवार्थे। निर्णयसिन्धौ तु 'यदास्तवेलायामि'त्यनेनास्तमयवेलायां प्रदोषे इत्यर्थः । सप्तम्यन्तपाठ एवोक्तः ॥ प्रदोषे च त्रिघटिकात्मकादस्तादुपरितनभागेऽर्थात्पूर्वरात्रेऽर्द्धरात्रे च मकर संक्रमे माधवकालादर्शनिर्णयामृतमदनरत्नपारिजातमते परेऽह्नि पुण्यकालः । दाक्षिणात्याश्चैतदेवाद्रियन्ते इत्युक्तम् । तस्यापवादमाह नारदः पीयूषधारायाम्—

"अर्द्धास्तमनसन्ध्या हि घटिकात्रयसम्मिता ।
तथैवार्द्धोदयात्सा च घटिकात्रयसम्मिता ॥"—इति ।

स्कन्दपुराणेऽप्येवम्–

"उदयात्प्राक्तनी सन्ध्या घटिकात्रयसंमिता।
सायंसन्ध्या त्रिघटिका ह्यस्तादुपरि भास्वतः॥"–इति।

अत्र प्रातः सन्ध्यायां यदि दक्षिणायनप्रवृत्तिस्तदा सूर्योदयादनन्तरं सम्पूर्णमहः पुण्यम्। तथा यदि सायंसन्ध्यायामुत्तरायणप्रवृत्तिस्तदा सूर्यास्तात्पूर्वं सम्पूर्णमहः पुण्यम्। यदाह नारदः–

"सूर्यस्योदयसन्ध्यायां यदि याम्यायनं भवेत्।
तदोदयादहः पुण्यं पूर्वाहः पूर्वतो यदि॥
सूर्यास्तमनसन्ध्यायां यदि सौम्यायनं भवेत्।
तदहः पुण्यकालः स्यात्परतश्चेत्परेऽहनि॥"–इति।

अत्र यद्युदयसन्ध्यातः प्राक् कर्कसंक्रमस्तदा प्रागिदन एव पुण्यकालो नोत्तरदिने। तथा यद्यस्तसन्ध्यामतिक्रम्य मकरसंक्रमस्तदोत्तरदिन एव पुण्यकालो न पूर्वदिने इति निष्कृष्टोऽर्थः।

अतो वृद्धगार्ग्यादिवाक्यनारदवाक्ययोः प्रदोपसन्ध्यापदोपादानेन सामान्यविशेषभावोऽवगन्तव्यः। वस्तुतस्तु अस्तमयवेलायामिति सामीप्यार्थसप्तम्या तत्समीपवर्तिप्रदोषे पूर्वरात्रे इत्यर्थे न कोपि विरोधः॥

यत्तु हेमाद्रौ स्कन्दपुराणवाक्यम्।
"धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा।

पूर्वाऽपरविभागेन रात्रौ संक्रमते यदा।
दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः।
उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि॥"—इति॥

तदपि सन्ध्याविषयकमेवेत्याहुरभियुक्ताः। विषुवे तु यथाश्रुतमेवेति।

ननु नायमयनपुण्यकालोद्यमः सफलः शास्त्रान्तरविरुद्धत्वात्। तथाहि—

"अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम्।
रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः॥
अर्द्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया।
ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम्॥
पूर्णे चेदर्द्धरात्रे तु यदा संक्रमते रविः।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ॥"

इति वृद्धवशिष्ठेनायनव्यतिरिक्तेषु दशसु संक्रमणेषु रात्रिगतेषु 'या याः सन्निहिता नाड्यस्तास्ताःपुण्यतमाः स्मृताः' इति कश्यपोक्तसामान्यवाक्याद्रात्रावेवानुष्ठाने प्रसक्तमह्नि संक्रमण इत्यादिनापोह्य दिवैवानुष्ठानं विहितं,तस्यापि पर्युदासः क्रियते 'मुक्त्वा मकरकर्कटौ' इति। तस्मान्मकरकर्कटयोः संक्रमे रात्रावेवानुष्ठानं कर्तव्यमित्युक्तं भवति। अत एवा याज्ञवल्क्यः—

"राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।

स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च ॥”—इति ।
वसिष्ठसुमन्तू अप्येवम् ।

एवमेतेषु वाक्येषु सामान्यवाचिनोऽपि संक्रान्तिपदस्य मकरकर्कटसंक्रान्तिपरत्वमवसीयते। यस्तु ‘रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः’ इति निषेधस्संक्रान्त्यन्तरे व्यवतिष्ठते । अत एवोक्तं कश्यपेन—

‘स्नानं दानं ग्रहणवत्सौम्ययाम्यायनद्वये ।’

इति । तस्माद्रात्रावयनसंक्रमे सति तत्रैव स्नानाद्यनुष्ठातव्यमिति हेमाद्रिमाधवादयः ।

कमलाकरस्तु प्रागुक्तवचने तयोर्दिनद्वयपुण्यत्वादेरेव पर्युदासान्मकरकर्कटयोरपि न ‘स्नानं दानं परेहनि’इत्यादिभिरहःपुण्यत्वोक्तेः । अहःपुण्यत्वानुपपत्त्या कल्परात्रिनिषेधस्य च प्रत्यक्षरात्रिविधिना बाधात्सर्वसंक्रांतिषु रात्रिगतासु रात्रावनुष्ठानविकल्प इत्याह ॥

एवं शास्त्रद्वयेन तुल्यबलत्वाद्विकल्पसिद्धौ तत्तद्देशप्रसिद्धशिष्टाचारेण व्यवस्था द्रष्टव्या । तत्र गौर्जरास्तु कश्यपादिवाक्यमनुसृत्य रात्रावयनसम्भवे सति रात्रावेव स्नानदानादि कुर्वन्ति । दाक्षिणात्यास्तु वृद्धगार्ग्यादिवाक्यमङ्गीकृत्य दिवस एव स्नानदानादि कुर्वन्ति । गौडा अप्येवमेवेति ॥

यदा तु दिने कर्कमकरसंक्रमस्तदा क्रमेण पूर्वोत्तरघटिकानियममाह वृद्धवशिष्ठः—

"अतीतानागते पुण्ये द्वे तूदग्दक्षिणायने ।
त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः"—इति ॥

अत्र निर्णयसिन्धुकालनिर्णयकारौ मकरे चत्वारिंशद्घटिका आहतुः।अतीतेत्यस्यार्थः—उत्तरायणमतीतं सत् पुण्यं, दक्षिणायनमागामि पुण्यं; तत्र कर्कसंक्रमस्य प्रागुक्तघटिकाः मकरे तूत्तरा उक्तघटिकाः पुण्या इत्यर्थः । अत्र वाक्ये यद्यपि दिनपदानुपादानं तथापि यदास्तमयवेलाया इति रात्रिपरविशेषवाक्यालोचनादिदं दिनपरं प्रतिभाति । तथा सति केनापि हेतुना समीपघटीषु श्राद्धाद्यनुष्ठानाऽसम्भवे परमावधित्वेन त्रिंशदादयो घटिका अभ्यनुज्ञायन्ते । यदा तु प्रतिबन्धाभावस्तदा"या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः" इति कश्यपोक्तेः समीपघटीष्वेव श्राद्धादि विधेयं सन्निहितपदग्रामे कारणाभावादिति न्यायाच्च ।

अथ 'पूर्वाः पराः षोडश घटिकाः पुण्याः'इति पूर्वं सामान्येनोक्तम् । इदानीं विष्णुपदादिसंक्रमेषु विशेषमाह—

"याम्यायने विष्णुपदे चाद्या मध्यास्तुलाऽजयोः ।
षडशीत्यानने सौम्ये परा नाड्योऽतिपुण्यदाः ॥"

याम्यायने कर्कसंक्रमे । विष्णुपदे वृषसिंहवृश्चिककुम्भसंक्रमे । संक्रान्तिकालादाद्याः षोडश घटिका अतिपुण्यदाः' अग्रिमास्तु न तथेति निष्कृष्टोऽर्थः ।

तुलामेषयोर्मध्या उभयतः षोडश षोडश घटिकाः पुण्याः। अथवा षोडशैव घट्यः पुण्याः षडशीत्यायने मिथुनकन्याधनुर्मीनसंक्रमेषु तथा सौम्ये मकरसंक्रमे संक्रान्तिकालात्परा अग्रिमाः षोडश नाड्योऽतिपुण्यदाः' प्रथमास्तु न तथेत्यर्थः॥ "पुण्यायां विष्णुपद्यां च प्राक्पश्चादपि षोडश ।" इति वृद्धवसिष्ठवाक्येनास्यैकवाक्यतावशात् ।

विषुवे तु सामान्यनिर्णय एवेति केचित्। दीपिकाकारस्त्वेवमाह–मेषे तुलायां च संक्रान्तिकालात्पूर्वमष्टौ परतश्चाष्टौ घटिकाः पुण्यकाल इति। युक्तं चैतत्। 'विषुवे च मध्याः' इति मध्यपदोपादानान्मध्ये षोडश घटिकाः पुण्या इत्युच्यते। कस्मात्कालान्मध्या इत्यपेक्षायां संक्रान्तिकालादेवेत्यतः पूर्वमष्टौ पश्चाच्चाष्टौ घटिकाः पुण्या इत्यर्थः। यत्तूक्तं बृहस्पतिना–

"वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश ।"

इति तुलामेषसंक्रान्तिकालात् प्राक्पश्चाच्च पञ्च पञ्च नाड्यः पुण्या इति। एतदपि युक्तमाद्यन्तसापेक्षत्वान्मध्यशब्दस्य गणितागतपुण्यकालघटिकानां मध्यविभागस्स्थूलदृशा दशघटिकात्मको भवति तदा तेषां पुण्यतमत्वसूचनार्थं 'या याः सन्निहिता नाड्यः' इति कश्यपोक्तेः ॥

ये च मकरसंक्रमे चत्वारिंशद्घटिकात्मकपुण्यकालाभ्यनुज्ञातारस्तेषामयमाशयः–सायंसन्ध्येतरात्रिभागे मकरसंक्रमे

तत्र स्नानदानादेर्निषेधाद्घटित्रयात्मकसान्ध्यकालरहितरात्रेः किञ्चिदधिकत्रिंशद्घटिकात्मिकायाश्चत्वारिंशद्घटिकासु व्यवकलने किंचिन्न्यूनदशघटिकात्मकः पुण्यकाल उत्तरेह्नि उपलभ्यतेव । तत्र च स्नानदानश्राद्धादिकर्मनिष्पत्तिसम्भव इति षडशीतिमखेष्वाद्याग्रिमघटीनां पुण्यकाले तरतमभावः । यत्तु—

"षडशीत्यां व्यतीतायां षष्टितुल्यास्तु नाडिकाः ।"

इति वृद्धवसिष्ठवाक्यम्।तत्प्राग्घटीषु प्रतिबन्धवशाच्छ्राद्धादेरसम्भवे सत्यग्रिमघटीषु श्राद्धायभ्यनुज्ञायाःपरमावधिकालेयत्तार्थम् । इदं सर्वं दिनसंक्रान्तिविषयं वेदितव्यम् । "अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम्"इति सामान्यवाक्यस्य 'याम्यायने विष्णुपदे'इत्यस्य च विशेषवाक्यस्य वाक्यैकवाक्यतावशतः । अत एव—

"रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः ॥"

इति रात्रिपरविशेषस्य सत्त्वाच्च ।

कमलाकरोपि मेषे प्रागूर्ध्वं च दश घटिकाः पुण्यकालः, वृषे पूर्वाःषोडश,मिथुने पराःषोडश,कर्के पूर्वास्त्रिंशत्,सिंहे पूर्वाः षोडश,कन्यायां पराः षोडश, तुलायां प्रागूर्ध्वं दश, वृश्चिके पूर्वाः षोडश, धनुषि पराः षोडश, मकरे चत्वारिंशत्पराः इत्याह।इदं च तेन हेमाद्रिमतेनोक्तम् ।

माधवमते तु मकरे पराः विंशतिः पुण्याः, कुम्भे पूर्वाः

षोडश, मीने पराः षोडशेति । सूर्योदयोत्तरं कर्कसंक्रमे तु परत एव पुण्यम्।यदा तु सूर्यास्तात्प्राङ्मकरसंक्रमस्तदा पूर्वमेव पुण्यम्।मध्याह्ने कर्कसंक्रमेतद्दिनस्य पूर्वार्द्धे मकरे चोत्तरार्द्धम्। रात्रावयनातिरिक्तदशसु संक्रान्तिषु पूर्वभागे पूर्वदिनस्योत्तरार्द्धमपरभागे उत्तरदिनस्य पूर्वार्द्धे पुण्यमुपलभ्यते । रात्रौ तु निशीथात्प्राक्परतश्च संक्रमेऽपरार्के हेमाद्यनन्तभट्टादिमते पूर्वोत्तरदिनयोः पञ्च नाड्यः पुण्याः । मतान्तरे तु रात्रौ पूर्वभागे मकरसंक्रमे उदये परेह्नि पंच घट्यः । रात्रौ पूर्वापरभागयोः कर्कसंक्रमे दिनान्ते पूर्वेह्नि पञ्च नाड्यःपुण्याइति यत्तत्पुण्यातिशयपरम् । अत्रापि पूर्वनिर्णयविरोधाभावः घटिकातरतमभावे पूर्ववद्व्यवस्थेति दिक् ।

हेमाद्रौ विश्वामित्रेण सर्वसंक्रान्तिषु दानविशेष उक्तः।मेषे मेषोदककुम्भादिदानम्।वृषे गोदानादि। मिथुने वस्त्रान्नपानादि दानम्।कर्के घृतधेनुप्रदानादि । सिंहे ससुवर्णच्छत्रादिदानम्।कन्यायां वस्त्रवेश्मादिदानम् । तुलायां धान्यगोरसदीपादिदानम्। वृश्चिके दीपवस्त्रादिदानम् । धनुषि वस्त्रयानादिदानम् । मकरे तिलवस्त्रदारुवह्न्यादिदानम् । कुम्भे गवाम्बुतृणादिदानम् । मीनेऽम्लानां मालानां च दानमिति ।

अत्रोपवासमाहाऽऽपस्तम्बस्त्रिरात्रम्। वसिष्ठस्त्वशक्तस्याहोरात्रोपवासमाह। अत्रोपवासः संक्रान्तिदिने । दानादि तु

पुण्यकाल इत्याचार्य्यचूडामणिः। विधिलाघवात् पुण्यकालदिन एवोभयमित्याहुरिति वृद्धाः। इदं च पुत्रिगृहस्थातिरिक्तविषयमिति जैमिनिः। अत्र श्राद्धमपि कार्यम्। किञ्चात्र स्नानदानश्राद्धाऽकरणे प्रत्यवाय उक्तो वशिष्ठादिभिः। एतद्दानादिकं सर्वमस्माभिः प्रसङ्गात्संक्षिप्तमुक्तम्॥

अथ नायं केवलसूर्यसंक्रम एव पुण्यकालः किन्तु चन्द्रादीनां ग्रहाणां नक्षत्रराश्योरपि संक्रमे पुण्यकालो भवति। सोपि सोपपत्तिकः प्रसङ्गतः प्रोच्यतेऽस्माभिः। तत्र जैमिनिः—

"नक्षत्रराश्यो रविसंक्रमे स्यु—
रर्वाक्परत्रापि रसेन्दुनाड्यः॥
पुण्यास्तथेन्दोस्त्रिशरापलैर्यु—
गेकैव नाडी मुनिभिः शुभोक्ता॥
ततश्चतस्रस्सपलाः कुजस्य
बुधस्य तिस्रो मनवः पलानि॥
अब्ध्यङ्घ्रिनाड्यः पलसप्तयुक्ता
गुरौ च शुक्रे सपलाश्चतस्रः॥
द्विनागनाड्यः पलसप्तयुक्ताः
शनैश्चरस्याभिहिताः सुपुण्याः॥"

इत्थं चन्द्रादीनामुक्तघटीपलानि चोभयतः पुण्यकाल इत्यर्थः॥ अत्रोपपत्तिः—

"भानोर्गतिः स्वदशभागयुतार्द्धिता वा

बिम्बं विधोस्त्रिगुणिता युगशैलभक्तः ॥"

इति सिद्धान्तशिरोमण्युक्तप्रकारेण रविचन्द्रयोर्मानकला ज्ञानेयाः ।

"व्यंघ्रीषवः सचरणा कृतवस्त्रिभाग–
युक्तादयो नव च सत्रिलवेषवश्च ।
स्युर्मध्यमास्तनुकलाः क्षितिजादिकानाम् ।"

इति भौमादीनामपि तत्रैवोक्ताः । तत्र क्रमेण मानकलाः ॥

"षष्टिघ्नबिम्बं ग्रहभुक्तिभक्तं
संक्रान्तिनाड्योऽखिलधर्म्मकृत्ये ॥"

इति भास्करोक्तदिशा संक्रान्तिनाड्यः स्युस्तत्र ग्रहभुक्तयस्तेनैवोक्ताः ।

"नन्दाक्षा भुजगा रवेः शशिगतिः खाङ्काद्रयोऽक्षाग्नय-
स्तुङ्गस्याङ्गकलाः कुवेदविकलाः पातस्य रामाश्विनः ।
माहेयस्य महीगुणा रसकरा ज्ञस्येषुसिद्धा रदाः
पञ्चेज्यस्य सितस्य षण्णवमिता अष्टौ शनेर्द्वे कले"–इति।

| सूर्य्यादीना कलाबिम्बानि मध्यानि | | | | | | | सूर्य्यादीना कलादिमध्यगतयः | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. | चं. | मं. | बु. | बृ. | शु. | श. | सू. | चं. | मं. | बु. | बृ. | शु. | श. |
| ३२ | ३२ | ४ | ६ | ७ | ९ | ९ | ५९ | ७९० | ३१ | ९५ | ५ | ९६ | २ |
| ३१ | ३ | ४५ | १५ | २० | २० | २० | ८ | ३५ | २६ | ८ | ० | ८ | ० |

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३३ | २ | ९ | ६ | ८८ | ९ | १०० | १६ | १ | ४ | ३ | ४४ | ४ | ८० |
| ० | २६ | ४ | २० | ० | ८ | ० | ३० | २३ | ३२ | २० | ० | ३४ | ० |

बुधशुक्रयोस्तु संक्रान्तिघटिकानयने सूर्यगतिरेव हारः कल्प्यस्तद्गतितुल्यगतित्वात्तयोर्वासना भाष्ये हि बुधशुक्रौ रवेरासन्नावेव कदाचिदग्रतः कदाचित्पृष्ठे तस्यानुचराविव सदा व्रजन्तौ दृश्येते । अतस्तयोरपि रविभागतुल्या एव भगणा इत्युपपन्नमिति भास्करेणाभिहितत्वात् । पठ्यमाना तु गतिस्तत्तच्छीघ्रोच्चयोःशीघ्रफलानयनार्थं वासनासिद्धजीर्णैः कल्पिता ।

अथो यथोक्तप्रकारेण साधिताः पुण्यकालघटिकाः पूर्वापरकालौ मिलित्वा पुण्यकाल इत्यर्थः । यथाऽत्र वासना प्रागुक्ता एतदर्थं नाड्यः प्राक्परतश्च पुण्याः यथार्द्धनाड्यः प्राक् परतश्च पुण्याः । अत्र गणितागतघटीपलेषु लिखितजैमिनिवाक्ये च क्वचित्किञ्चित्पलभेदो घटिकाभेदश्च खगतिस्पष्टीकृतिवशात: । युक्तं चैतत् । आकाशे हि वेधादिना स्पष्टा एव खगा दृश्यन्ते न मध्यमाः । दिनद्वयस्पष्टखगान्तरालं च गतिरिति स्पष्टगत्यैव बिम्बसंक्रान्तिघट्यानयनमुचितम् । उक्तञ्च केशवार्केण—

"कुजादिकानामपि बिम्बलिप्ताः
षष्ट्या गुण्याः स्वस्वजवेन भाज्याः ॥
नाड्यादिकः संक्रमणान्तराल-
कालः स्फुटस्तु स्फुटभुक्तिबिम्बैः"—इति ॥

अपिशब्दात्सूर्याचन्द्रमसोर्ग्रहणं तथा सति मध्यमापेक्षयास्पष्टगतिर्बिंबयोरुपचयापचयसाम्यैस्तत्तद्घटिकानाम-

ष्युपचयापचयसाम्यानि क्रमेणापतन्ति तेषां चानियतत्वात् पद्ये उपनिबन्धायोगाज्जीर्णैर्नियतमध्यगत्या सूर्यादीनां ग्रहाणां पुण्यकालघटिका आनीयोपनिबन्धः कृतः । अतो यो जैमिनिवाक्ये 'सार्द्धाश्वतत्त्वः पलसप्तयुक्ता गुरोरि'ति पाठो माधवादिभिरपाठि । तथा हेमाद्रिणापि 'द्विनागनाड्य' इति।नागा अष्टौ द्विरावृत्ता द्विनागाःषोडश नाड्यः शनैश्चरस्य संक्रान्तौ पुण्यकाल इति यद्व्याख्यायि तदुभयमपाकृतं भवति।तथा रामचन्द्राचार्या अपि कालनिर्णये हेमाद्रिमूलकममुमर्थं स्वपद्येनोपनिबध्नन्तश्चिन्त्योक्तयो ज्ञेयाः । तस्मात्सर्वग्रहाणां राशिनक्षत्रयोः संक्रान्तिषु पुण्यकालोऽस्ति। भास्करोऽपि 'रवेस्तु ताः पुण्यतमा' इति वदंश्चन्द्रादिसंक्रान्तिनाड्यःपुण्या इत्यसूचयत्।"अतिशायने तमबिष्ठनौ" इति पाणिनिवचनात्।"ग्रहःस्वसंक्रान्तिगो मिश्रफलं विधत्ते"इति सूर्यादिसंक्रान्तिसाधारणम्। तत्र सकलग्रहसंक्रान्तिषु दिनरात्रिविष्णुपदादिभेदेन सूर्यसंक्रमणवन्निर्णयो बोध्यः।एवं सायनांशसंक्रान्तिष्वप्युक्तवत्पुण्यकालोऽवधार्यः।संक्रान्तिमान्यता हि गुर्जरदेशेऽस्तीत्यलमतिप्रसक्त्याऽनुप्रसक्तेन॥

## अथ श्राद्धकालो निर्णीयते ।

तत्र माङ्गलिकत्वाद्वृद्धिश्राद्धकालनिर्णयस्तावत् । तत्राग्न्याधानात्पुत्रजननिमित्तेतरवृद्धिश्राद्धेषु प्रातःकालो मुख्यः पूर्वाह्णो गौणः । 'आनवृद्धिनिमित्तकम्' इति माधवीये

हारीतशातातपस्मृत्यन्तरोक्तेः । स च पञ्चधाविभक्तदिनप्रथमभागः षड्घटिकात्मा, केनचिन्निमित्तेन तदसम्भवे पूर्वाह्णोपि । तदसम्भवे तु 'सह वाम्वापूर्वकं स्यात्प्रगे' प्रगे पूर्वाह्णे इति कालनिर्णयोक्तेः । कमलाकरेण तु प्रातःशब्दः सार्द्धप्रहरपर उक्तः । "प्रहरोर्द्धार्द्धसंयुक्तःप्रातरित्यभिधीयते" इति पृथ्वीचन्द्रोदयस्थितगार्ग्योक्तेः । निर्णयामृतेप्येवम् । आधानाङ्गं नान्दीश्राद्धं त्वपराह्ण एव, तस्याग्निकत्वादिति निर्णयसिन्धौ 'आग्निकं त्वपराह्णतः' इति गालवविष्णूक्तेः । पृथ्वीचन्द्रोदयधृतविष्णुधर्मोक्तेः । पुत्रजन्मनि तु दिवा रात्रौ सन्ध्ययोर्वा नाभिनालकर्तनतः प्राक् मुख्यः कालः 'अच्छिन्ननाले कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि' इति निर्णयसिन्धौ पृथ्वीचन्द्रोदयधृतविष्णुधर्मोक्तेः । अत्र च केनचिन्निमित्तेन मुख्यकालातिक्रमे बैजवापेन स्तनपानतः पूर्वमप्यभिहितम् "स्तनप्राशनतः पूर्वंनाभिकर्त्तनतोऽपि वा" इति। स्मृतिसङ्ग्रहे तु—आशौचान्ते कार्यमित्युक्तम् । निर्णयसिन्धौ—मुख्यकालातिक्रमे गौणयोरनयोः कालयोस्तु प्रातरेव कार्यं न मध्याह्नादिषु । संक्रान्तिग्रहणद्रव्यब्राह्मणसम्पत्तिगजच्छायादिनिमित्तकश्राद्धेषु तत्तन्निमित्तकाल एव मुख्यः कालः । संक्रान्तिषु पुण्यकालो गौणकालः मन्वादियुगादियुगान्तकल्पादितिथिषु शुक्लपक्षगासु पूर्वाह्णः, कृष्णपक्षगास्वपराह्णो मुख्यकालः ।

'पूर्वाह्णे तु सदा कार्याः शुक्ला मनुयुगादयः ।
दैवे कर्मणि पित्र्ये च कृष्णे चैवाऽपराह्णिके' ॥

इति निर्णयसिन्धुधृतपाद्मोक्तेः । हेमाद्रिदीपिका-जस्मन्तभास्करस्मृत्यर्थसारदिवोदासीया अप्येवम् । दिनद्वये तत्तिथिसत्त्वे परैवेति हेमाद्र्यादयः । निर्णयामृतादयस्तु श्राद्धे त्वापराह्णिक्येवेति व्यवस्थां जगदुः । सेयं पूर्वोक्तानेकवचनविरोधात् 'पूर्वाह्णे दैविकं कुर्यात्' इत्यादिवचनादेव सिद्धेर्वचनवैयर्थ्याच्च स्वाच्छन्द्यविलसितमात्रमित्युपेक्षणीयेति ।

अथाश्विनपौषमाघफाल्गुनाऽसिताष्टम्योऽष्टकाः केश्चिन्मार्गादिमासचतुष्टयासिताष्टमीष्वसिताश्विनाष्टम्यां चाष्टकेति चोक्तं मनुस्मृतिटीकायाम्।पौषादिमासाऽसिताष्टम्यस्तिस्र एव स्वीकृताः।किञ्चैतन्मासीयासितनवम्योऽन्वष्टका अष्टकानामनुपश्चाद्भवन्तीति व्युत्पत्तेः । आसु नवपिण्डात्मकं मातृपूर्वकं श्राद्धं पार्वणत्वादपराह्णे कार्यमिति हेमाद्रिदीपिके । कात्यायनपृथ्वीचन्द्रोदयच्छागलेया निर्णयसिन्धौ पितृपूर्वकमाहुः।अत्र शाखाभेदेन व्यवस्थेत्यपि पृथ्वीचन्द्रोदयः । मातृपूर्वकं जीवत्पितृकविषयमिति निर्णयदीपः । 'एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान्पितॄन्' इति याज्ञवल्क्यस्मृतेः पितृपूर्वकमेव ।

अथ मरणानन्तरं वर्षपर्यन्तं प्रतिमासं मरणतिथौ यानि मासिकश्राद्धानि तान्येकोद्दिष्टानि तानि च वक्ष्यमाणलक्षणे कुतपे कार्याणीति माधवीये व्यासहारीतगौतमशातातपादिवचनेभ्योऽवसीयते। वचनानि तु विस्तरभियाऽत्र न लिखितानि। द्वादशाहपिण्डनपक्षे तु सपिण्डनतः प्रागनुष्ठेयानि न तत्र कालनियमः। सपिण्डीकरणं त्वपराह्ण एव, तस्य पार्वणत्वात्। सपिण्डीकरणं कुतपे तस्यैकोद्दिष्टत्वादिति याज्ञवल्क्याशयः।

अथ क्षयाहकालनिर्णयं वक्तुं तावत्क्षयाहस्वरूपमाह निर्णयसिन्धौ हेमाद्रिधृतव्यासः—

"मासपक्षतिथिस्पृष्टे यो यस्मिन्म्रियतेऽहनि।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः"
इति। नारदीयेऽप्येवम्। अत्र चान्द्रं मानं ज्ञेयम्।
'आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते।'

इति गार्ग्योक्तेः। अत्र श्राद्धं नानास्मृतिष्वेकोद्दिष्टं पार्वणं चोक्तम्। तत्तत्स्मृतिवचनानि चोक्तानि निर्णयसिन्धौ, तान्यत्र विस्तरभिया नोपन्यस्तानि। किञ्चात्र पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्पः स च देशाचाराद्व्यवस्थित इति। एतद्देशीयगौडशिष्टास्तु अमायां पितृपक्षे च मृतानां पिण्डत्रयात्मकं पार्वणमनु तिष्ठन्ति।

"अमायां संक्षयो यस्य पितृपक्षेऽथ वा पुनः ।
पार्वणं तस्य कर्तव्यं नैकोद्दिष्टं कदाचन"–इति ।
"मृताहनि तु कर्तव्यं प्रतिमासं च वत्सरम् ।
प्रतिसंवत्सरे चैवमाद्यमेकादशेऽहनि" ॥

इति याज्ञवल्क्यस्मरणे प्रतिसंवत्सरमिति पदाज्ज्ञापका-न्मृताहे त्वेकोद्दिष्टमेव कुर्वन्ति । हरिहरभाष्ये साग्नेः पार्वणं निरग्नेरेकोद्दिष्टमुक्तम् । निर्णयामृतेऽपुत्रस्य पत्नीव्यतिरिक्त-कर्तृत्वे एकोद्दिष्टं पत्नीकर्तृके पार्वणम् । श्राद्धविवेकेऽत्र विशेषोऽमावास्यापितृपक्षमृतयोर्मातापित्रोर्मातुरेकोद्दिष्टं पितुः पार्वणम् ।

"अमायां पितृपक्षे च पित्रोश्चेन्मरणं भवेत् ।
एकोद्दिष्टं तु मातुः स्यात्पितुः पार्वणमेव च ॥"

अथ क्षयाहकालनिर्णयो निर्णयामृते । अत्रापराह्णव्यापि-नी तिथिर्ग्राह्योभयत्रापराह्णस्पर्शाभावे तु पूर्वैव सायंकाल-व्यापिनी ग्राह्येत्युक्तम् । तत्र नारदः–

"दर्शञ्च पौर्णमासञ्च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ।"

स्मृत्यन्तरेऽपि–

"द्विरह्व्यापिनी चेत्स्यान्मृताहस्य तिथिर्यदा ॥
पूर्वविद्धा प्रकर्तव्या त्रिमुहूर्ता भवेद्यदि"–इति ।

पूर्वेद्युः सायमिति वाक्यशेषः । पूर्वेद्युः सायं "त्रिमुहूर्त्ताभावे परैव कुतपकालव्यापिनी ग्राह्येति ॥

"त्रिमुहूर्तान चेद्ग्राह्या परैवकुतपेहिसा॥"इतिगोभिलोक्तेः॥

मैथिलाः श्राद्धकौमुदीदीपिकापृथ्वीचन्द्रोदयकाराश्च निर्णयामृतमतसपराह्णकालं पिण्डत्रयात्मकक्षयाहविषयमाहुः,एकपिण्डात्मकक्षयाहश्राद्धे तूक्तलक्षणं मध्याह्नकालमुररीकुर्वते । स च पञ्चदशधा विभक्तदिवसस्य सप्तमाष्टमनवममुहूर्तात्मकः । ते च मुहूर्तौ गान्धर्वकुतपरौहिणसंज्ञकास्तत्रैकोद्दिष्टस्योपक्रमे कुतपस्य पूर्वोत्तरभागाविच्छया विकल्पितौ । तदाह व्यासः—

"कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् ।
आवर्त्तनसमीपे वा तत्रैव नियतात्मवान् ॥"—इति ।

समाप्तिकालमाह श्लोकगौतमः—

"आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् ॥"

तदेवं कुतपरौहिणयोर्मध्यान्हगतमध्यमचरमभागयोःकर्मकालत्वेन व्यवस्थितयोः सतोस्तद्व्यापिनी तिथिरेकोद्दिष्टे ग्रहीतव्येति स्थितम् । अत्र पूर्वेद्युरेव परेद्युरेव वा मध्याह्नव्याप्तिरित्येनयोः पक्षयोर्न कोपि सन्देहः । उभयत्र तद्व्यापित्वे तत्स्पर्शाभावो वेत्यनयोः पक्षयोः पूर्वेद्युरेवानुष्ठानम् । तथा सति पूर्वोदाहृतान्यपराह्णसायाह्नास्तमयव्याप्तिविषयाणि पित्र्य-

सामान्यवचनान्यनुगृहीतानि भविष्यन्ति। उभयत्र साम्येनैकदेशव्याप्तौ स्वर्गादिवाक्येन निर्णयः कार्यः । वैषम्येणैकदेशव्याप्तौ तु यदा पूर्वेद्युरेव महती तदा महत्त्वानुग्रहात्सामान्यवचनानुग्रहाच्च पूर्वेद्युरेवानुष्ठानम्। यदा तु परेद्युरेव महती तदा सामान्यशास्त्रमुपेक्ष्यापि महत्त्वमेवादरणीयमिति पार्वणश्राद्धनिर्णये वक्ष्यते। अतस्तेनैव न्यायेनात्रापि परेद्युरेवानुष्ठानमिति माधवः। यदा विघ्नवशाद्दिने संवत्सरश्राद्धं न कृतं तदा रात्रावपि कार्यम् ॥

"मृताहं समतिक्रम्य चाण्डालेष्वपि जायते ।"

इति मरीचिना मृताहातिक्रमे दोषस्योक्तत्वात्।अकरणे अन्या अपि दोषोक्तयो निबन्धेषु, विस्तरभियाऽत्र नोपन्यस्ताः। न च नक्तं श्राद्धं कुर्वीतारब्धे वा भोजनसमापनमित्यापस्तम्बेन गौणकालस्योक्तत्वादिति माधवः। आरब्धश्राद्धविघ्नवशाद्रात्रिपातभोजनसमाप्त्यन्तं रात्रौ कार्यम्. शेषसमाप्तिः परदिन एवेति हरदत्तः। ग्रहणदिने वार्षिकप्राप्तौ तद्दिन एवामान्नेन हेम्ना वा कुर्यात् । अत्र रजस्वलानिषेधः स्त्रीकर्तृकश्राद्धविषयः । तदाह निर्णयामृते गौतमः—

"अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके ।
रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेऽहनि ॥"

इति। तच्च प्रथमाब्दिकं शुद्धमासि मृतस्य प्रथमाब्दे तस्मि-

न्नेव मासे मलिने द्वादशमासिकोर्ध्वं त्रयोदशेऽतीते मलमास एव कार्यम् ।'मृतिशुक्लासाद्दिपङ्क्तीपरः'इति कालनिर्णयोक्तेः । हेमाद्रावप्येवम्।मम तु एवं भाति।शुद्धमासशुक्लपक्षमृतस्याऽऽद्याब्दिकं तद्वर्षान्ते मृतमासस्यैवाधिक्येऽधिकमासशुक्लपक्षीयमृतितिथौ कार्य्यम् ।

"असंक्रान्तेपि कर्तव्यमाब्दिकं प्रथमं द्विजैः"

इति वृद्धवसिष्ठहारीतोक्तेः ।

"आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे ।"

इत्यादियमोक्तेश्च । शुद्धमासकृष्णपक्षमृतस्य तु प्रथमाब्दिकं तन्मासशुद्धकृष्णपक्षीयमृतितिथौ कार्यं न मलमासकृष्णपक्षे ।

"सांवत्सरं न वर्धेत श्राद्धं चैव मृतेहनि ।"

इति पैठीनस्युक्तेः ॥

"प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः ।
क्वचित्त्रयोदशेपि स्यादाद्यं त्यक्त्वा तु वत्सरम् ॥"

इति लघुहारीतोक्तेश्च । शुद्धमासमृतस्य तदितराधिकमासोन्तरा पतति तदा तस्य द्विरावृत्तिं कृत्वा चतुर्दशे शुक्ले मृतिमास एवाद्याब्दिकं कार्य्यम् ॥

"अब्दमम्बुघटं दद्यादन्नं वापि सुसंचितम् ।
संवत्सरे विवृद्धेपि प्रतिमासं च मासिकम् ॥"

इति कौथुमिनाऽधिकमासिकविधानात् ।

"मासपक्षतिथिस्पृष्टे यो यस्मिन्म्रियतेऽहनि ।"

इत्यनेन व्यासेन तन्मासीयतत्पक्षतत्तिथिविधानाच्च। प्रथमाब्दिकाभिधमहःश्राद्धं मृतानां नृणां कुर्यान्मासि चतुर्दशे इति कालनिर्णयोक्तेश्च । द्वितीयाब्दिकं तु शुद्धमास एव कार्यम्, नाधिके ।

"वर्षे वर्षे च यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मलमासे न तत्कार्यं व्याघ्रस्य वचनं यथा ॥"

इति सत्यव्रतोक्तेः। 'प्रत्यब्दं द्वादशे मासि कार्या' इति लघुहारीतोक्तेश्च। 'मृतिशुक्लासात्' इत्यादिकालनिर्णयोक्तिस्तु मृतिमासेतराधिकमासस्यान्तरापाते सगतिका । मलमासमृतानामाब्दिकं मलमास एव। क्षयमासे मृतानां प्रथमे तिथ्यर्द्धे मृतस्य पूर्वो मासोऽन्त्यार्द्धे मृतस्योत्तर इति । दर्शे वार्षिकं चेत्तदा पूर्वं वार्षिकं कृत्वा ततः पिण्डपितृयज्ञो दर्शश्राद्धं चेति निर्णयदीपे क्रम उक्तः। स्मृतिसारेपि। युक्तश्चैवम् । शेषमनुपयोगान्नोपन्यस्तमत्रेति ॥

## अथ पार्वणश्राद्धकालनिर्णयः ।

तत्र यद्यपि पर्वण्यमायां भवं पार्वणमिति व्युत्पन्नं पार्वणं प्रतिपदादितिथिषु न प्राप्नोति तथापि तद्विकृतिरूपतया त्रिपुरुषोद्देशेन कर्तव्यकाम्यश्राद्धादेः पार्वणत्वं व्यवहर्तुं शक्यम्। तच्च श्राद्धं पञ्चधा विभक्तस्याह्नस्त्रिमुहूर्तात्मके चतुर्थभागेऽपराह्णे कार्यमिति वृद्धयाज्ञवल्क्यस्मृतिटीकाकृन्मित्रमिश्रः ।

"ऊर्ध्वं मुहूर्तात्कुतपायन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥"

इति कुतपे आरम्भस्तदूर्ध्वमुहूर्तचतुष्टये समापनमिति मिताक्षरा । जरमन्तभास्करभगवन्तभास्करौ तु पञ्चदशधाविभक्तदिवसस्यैकादशद्वादशभागरूपोऽपराह्ण इत्याहतुः। पञ्चधाविभागपक्षे तृतीयो भागः पार्वणारम्भकाल एकोद्दिष्टगौणकालो वेति च।त्रिकाण्डमण्डनोऽप्येवम् । कमलाकरस्तु मिताक्षरोक्तमपराह्णं संमनुते । माधवोऽप्येवम् । तदेवं पार्वणश्राद्धस्याऽपराह्णः कर्मकालः कुतपः मारम्भकाल इति भवेतामेतौ कर्मतदुपक्रमकालौ । 'रौहिणं तु न लङ्घयेत्' इत्येकोद्दिष्टविषयम् । यदा तिथिः कुतपाऽपराह्णोभयव्यापिनी न सम्भवति। तदा केवलाऽपराह्णव्यापिन्यपि गृहीतव्या । "अपराह्णः पितृणाम्" इति श्रुतेः । अपराह्णव्याप्तिरपि षोढा भिद्यते । तत्र पूर्वेद्युरपराह्णव्याप्तौ यथोक्तवचनेन पूर्वेद्युरेव । परेद्युरेवाऽपराह्णव्याप्तौ यथोक्तवचनात्मारम्भकालसत्त्वाच्च परेद्युरेव । कमलाकरोप्येवम् । 'दिनद्वये तद्व्याप्तौ तदस्पर्शेशतसमव्याप्तौ पूर्वैव ह्यपराह्णव्यापिनी,इत्यादि मरीचिस्मृतेः । 'दर्शं च पौर्णमासञ्च' इत्याद्यपरार्के नारदोक्तेश्च ।

"द्व्यहेप्यव्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः ।
पूर्वविद्धा प्रकर्तव्या त्रिमुहूर्ता भवेद्यदि ॥"

इति सुमन्तूक्तेः । यदि सायं त्रिमुहूर्त इति वाक्यशेषः। वृद्धमनुरप्येवम् ।

मदनरत्नेऽप्येवम् । कमलाकरोऽप्येवम् । माधवपृथ्वीचन्द्रोदयौ तु उभयत्रापराह्णव्याप्तौ बौधायनमतेन क्षये पूर्वा, वृद्धौ परेत्याहतुः । दीपिकाबृहन्नारदीये अप्येवम् । अत्रेदं चिन्त्यते । किमिष्टतिथेर्वृद्धिक्षयाभ्यां निर्णय उतोत्तरतिथेः। तत्र पूर्वतिथेर्वृद्धिक्षयाभ्यामिति तावत्प्राप्तम्। खर्वादिवाक्यतुल्यतया प्रतिभासमानत्वात् । तथा हि—

"खर्वदर्पौ परौ कार्यौ हिंसा स्यात्पूर्वकालिकी ॥"

इति । खर्वः साम्यं, दर्पो वृद्धिः, हिंसा क्षयः । अत्रानुष्ठामाङ्गतिथेरेव धर्माः खर्वादयो न तु परतिथेस्ततोऽत्र ग्राह्यतिथिगतावेव वृद्धिक्षयाविति प्राप्ते ब्रूमः । उत्तरतिथिगतावेवात्र वृद्धिक्षयौ, नेष्टतिथिगतौ।कुतोऽपराह्णद्वयव्यापित्वाभिधानात्। पूर्वेद्युरामध्याह्नाऽवसानं पूर्वतिथिः प्रवृत्ता ततोऽपराह्णोपक्रममारभ्य परेद्युरपराह्णाऽवसानपर्यन्तत्वे सतीष्टतिथेरपराह्णव्यापित्वं भवति। तच्च त्रिमुहूर्तवृद्ध्या सम्पद्यते न तु क्षयेण। तथा च "क्षये पूर्वा तु कर्त्तव्या" इत्येतन्नोपपद्यते, उत्तरतिथिगतवृद्धिक्षयस्वीकारे सुतरामिदं वचनमुपपद्यते, । तथाहि—यदेष्टतिथ्युत्तरतिथिः सायाह्नं प्रविशति तदा तिथिवृद्धिः,तत्र परेद्युरनुष्ठानं न्याय्यम्, कुतपमारभ्याशेषमुख्यकालव्यापित्वात् । यदेष्टतिथ्युत्तरतिथिः परेद्युरपराह्णेपि कियती क्षीयते तदेष्टतिथिः पूर्वविद्धा कर्त्तव्या उत्तराविद्धाया इष्टतिथेर्ज्योतिशास्त्रप्रक्रियपाऽपराह्णव्यापित्वेपि पारिभाषिक्या स्मार्तप्रक्रियया तदव्यापित्वात् । तथा च स्मर्यते—

"तिथ्यादौ च भवेद्यावान्ह्रासो वृद्धिः परेहनि ।
तावान्ग्राह्यः स पूर्वेद्युरदृष्टोपि स्वकर्मणि ॥" इति ।

तिथ्यादावित्यादिशब्देन नक्षत्रयोगौ गृह्येते तिथिनक्षत्रयोगेषु क्षीयमाणेषु स क्षयो यावद्घटिकापरिमितो भवति तावद्घटिकापरिमितः क्षयस्तेभ्यः पूर्वेषु तिथिनक्षत्रयोगेषु ज्योतिश्शास्त्रेणादृष्टोपि स्मार्तपरिभाषया ग्रहीतव्यः। एवं वृद्धिरपि द्रष्टव्या। तथा सति प्रकृतेपीष्टतिथ्युत्तरतिथेरपराह्णे यावान् क्षयस्तावान् पूर्वेद्युरिष्टतिथौ योजनीयः।तथा सत्युत्तरविद्धेष्टतिथिर्नापराह्णव्यापिनी, पूर्वविद्धा त्वपराह्णव्यापिनी, सैव ग्रहीतव्या भवति। तस्मिन्वचने 'स्वकर्मणि' इत्युच्यते। ततः स्वकर्मनिमित्तौ वृद्धिक्षयप्रक्षेप इत्यर्थः सम्पद्यते । तच्च प्रकृतं प्रत्याब्दिकं न तूत्तरतिथेः स्वकर्म।अतः कथं तदीयवृद्धिक्षयौ वचनस्यास्य विषयौ भवतः।नैष दोषः। माभूत्प्रत्याब्दिकमुत्तरतिथेः कर्म।इष्टतिथेस्तु तद्भवत्येव। तथा सतीष्टतिथेर्यत्स्वकर्म्म तस्मिन्निमित्तभूते सति तस्यामिष्टतिथौ वृद्धिक्षयौ प्रक्षेपणीयाविति वचनार्थः सम्पद्यते। तौ च वृद्धिक्षयौ प्रक्षेपाधिकरणात्तिथ्यादेरुत्तरतिथ्यादिगताविति लभ्यते ॥

ननु तिथ्यन्तरगतयोर्वृद्धिक्षययोस्तिथ्यन्तरप्रक्षेपे सति ज्योतिश्शास्त्रप्रसिद्धिःसर्वत्र विप्लुवेत, ततस्तां प्रसिद्धिमुपजीव्य प्रवृत्तः स्मार्तनिर्णयः सर्वोपि विप्लुवेतेति चेत् । मैवम् । न खल्वयं वृद्धिक्षयप्रक्षेपोऽनुष्ठेयतिथिनिर्णयायोपन्यस्यते,किं तर्हि शास्त्र-

न्तरेण।नुष्ठेयतिथौ निर्णीतायां तदुपपादनायैतावापाद्यौ वृद्धिक्षयावुपन्यस्येते।यथा दानव्रतयोःशास्त्रान्तरेण त्रिमुहूर्तव्यापिन्यां तिथौ निर्णीतायां कर्मकालव्याप्त्यभावशङ्कामपनेतुं 'सा तिथिः सकला ज्ञेया' इत्यविद्यमानमपि साकल्यतामापाद्यते,एवमत्रापि'अपराह्णद्वयव्यापिनी' इत्यनेन बौधायनवचनेनज्योतिश्शास्त्रप्रसिद्धमिष्टतिथ्युत्तरतिथेःक्षयमुपजीव्यपूर्वविद्धायामिष्टतिथौ निर्णीतायां कुतपादिकृत्स्नकालव्यापिन्युत्तरविद्धेष्टतिथिः कुतो न ग्राह्येति शङ्कामपनेतुं तिथ्यादाविति वचनेनोत्तरविद्धायामिष्टतिथावपराह्णे क्षय आपाद्यते।अतो ज्योतिश्शास्त्रप्रसिद्धेः स्मार्तनिर्णयस्य वा न कोपि विप्लवः ।

यदा दिनद्वयेप्यपराह्णमस्पृष्ट्वाऽवशिष्टं कञ्चित्कालं व्याप्नोति तदा पूर्वविद्धेष्टतिथिर्ग्रहीतव्या ।

"न द्व्यहव्यापिनी चेत्स्यान्मृताहे तु यदा तिथिः ।
पूर्वविद्धैव कर्तव्या त्रिमुहूर्ता भवेद्यदि ॥"

इति माधवीये मनूक्तेः ।

"न व्यहव्यापिनी चेत्स्यान्मृताहस्य तु या तिथिः ।
पूर्वस्यां निर्वपेत्पिण्डमित्याङ्गिरसभाषितम् ॥"

इति तत्रैव सुमन्तूक्तेश्च ।

नन्वपराह्णस्पर्श उभयत्रापि समानः,प्रारम्भकाले तु परेद्युः कुतपस्य सद्भावो विशिष्यते। ततः परविद्धैव कुतो न ग्राह्येति चेत्, गुणाधिक्यादिति ब्रूमः।परेद्युः कुतपव्यतिरेक एव गुणः।

परेद्युस्तु तिथिमूलत्वमस्तमयव्याप्तिश्चेति गुणद्वयम् । मूलस्य प्राशस्त्यं नारदीयपुराणे दर्शितम् ॥

"पैत्रं मूलं तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः ।"

इति । शिवरहस्यसौरपुराणयोरप्येवम् । अस्तमयव्याप्तेः प्राशस्त्यमाह मनुः—

"यस्यामस्तं रविर्याति पितरस्तामुपासते ।
स पितृभ्यो यतो दत्तो ह्यपराह्णः स्वयम्भुवा ॥"

इति । एतत्प्राशस्त्यार्थमेवोत्तरविद्धां प्रतिषेधति व्यासः "अह्नोऽस्तमयवेलायाम्" इत्यादिना माधवीये । न चापराह्णवेलायामविद्यमानतया कर्मकालव्याप्तिरहितायास्तिथेरनुपादेयत्वमिति शङ्कनीयम्, आपाद्यायास्तद्व्याप्तेर्विद्यमानत्वात् । अत एव वशिष्ठः—

"पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते ।"—इति ॥

नारदीयेऽप्येवम् । उदाहृतास्तमयस्पर्शवाक्येनकालमात्रवाक्येन च पूर्वेद्युःसायंकालव्याप्तिर्विवक्षिता। परेद्युरपराह्णस्पर्शहीनस्यपूर्वदिने सायंव्याप्तेरवश्यंभावात्। अन्यथा षण्मूहूर्तक्षयप्रसङ्गात् । एतदभिप्रेत्य गोभिलः—

"सायाह्नव्यापिनी या तु पार्वणे सा उदाहृता ।"

इति । ईदृशे विषये पूर्वविद्धायाः कर्त्तव्यता शिवरहस्यब्रह्मवैवर्तसौरनारदीयपुराणेषु व्यतिरेकमुखेन दर्शिता ।

"दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥"—इति ॥

नन्वेवमुभयत्राऽपराह्णस्पर्शाभावे तथाऽपराह्णद्वयव्यापिन्यामुत्तरतिथिगतवृद्धिक्षयाभ्यां निर्णयोस्तु तिथेरुत्तरसाम्ये तु किं तिथिमूलत्वास्तमयव्याप्तिगुणद्वयवशात्पूर्वविद्धा कर्त्तव्या किं वा कुतपसद्भाववशादुत्तरविद्धा । तत्रापराह्णद्वयस्पर्शाभावविषयन्यायेन पूर्वविद्धायां प्राप्तायां देवस्वामिवचनादुत्तरविद्धेति निश्चयः । वचनं हि न्यायाद्बलीयः । यदा तु दिनद्वयेऽप्यपराह्णैकदेशव्यापिनी तदापि वैषम्येण तथाव्याप्तौ महत्त्वेन निर्णतव्यम् । तदाह मरीचिः "ह्यपराह्णव्यापिनी चेत्स्यात्" इत्यादिना । माधवीये साम्येनोभयत्र व्याप्तिश्च तत्तिथिगतैर्वृद्धिक्षयसाम्यैस्त्रिधा भिद्यते । तथा हि पूर्वेद्युरपराह्णस्य द्वितीयां घटिकामारभ्य परेद्युरपराह्णस्य चरमघटिकां विहायावशिष्टासु पञ्चसु घटिकासु यदा तिथिर्वर्तते तदा पूर्वापराह्णस्य प्रथमघटिकां द्वितीयाऽपराह्णस्य चरमघटिकां च विहायावशिष्टासु पञ्चसु घटिकासु वर्तमानत्वात्साम्येनैकदेशव्याप्तिर्भवति । तिथिश्च तदा घटिकाचतुष्टयेन वर्द्धते यदा पूर्वापराह्णस्य चरमघटिकायामुत्तरापराह्णस्य प्रथमघटिकायां वर्त्तते तदापि साम्येनैकदेशव्याप्तिर्भवति घटिकाचतुष्टयेन तदा तिथिः क्षीयते । यदा पूर्वापराह्णस्य चरमे घटिकात्रये द्वितीयापराह्णस्य प्रथमघटिकात्रयेपि वर्तते

तदापि साम्येनैकदेशव्याप्तिस्तदवस्था तिथिस्तु न वर्द्धते, नापि क्षीयते, किन्तु समैव । ईदृशे विषये सर्वदर्पवाक्यान्निर्णयः । यदा विघ्नवशाद्दिने सांवत्सरं श्राद्धं न कृतं तदा रात्रावपि कार्यम्।"मृताहं समतिक्रम्य"इत्यादिना मरीचिना तदतिक्रमे दोष उक्तः । आरब्धश्राद्धं विघ्नवशाद्रात्रिपातभोजनसमाप्तिपर्यन्तमित्याद्युत्तरदिन इत्यन्तमुक्तं प्रागेकोद्दिष्टनिर्णये । इत्थं प्रतिपदादितिथिषु पार्वणश्राद्धनिर्णयो बोध्यः ।

## अथामायां पार्वणश्राद्धकालो निर्णीयते ।

तत्रापराह्णस्य तत्कर्मकालत्वं कुतपस्य प्रारम्भकालत्वमित्येतद्द्वयं प्रत्याह्निकनिर्णये प्रपञ्चितम् । तथा सत्यपराह्णस्य मुख्यकालत्वात्पूर्वेद्युरेव वा परेद्युरेव वाऽपराह्णव्यापिन्यमा ग्रहीतव्या । तत्रापराह्णव्यापिन्याः पूर्वतिथेर्ग्राह्यत्वमाह हारीतः—

"यस्यां समागतः सोमो मृणालमिव दृश्यते ।
अपराह्णे तु या तस्यां पिण्डानां करणं ध्रुवम् ॥"—इति ।

यत्तु कार्ष्णाजिनिनोक्तम्—

"भूतविद्धाममावास्यां मोहादज्ञानतोपि वा ।
श्राद्धे कर्मणि ये कुर्युस्तेषामायुः प्रहीयते ॥"

इति ।तदप्यपराह्णव्याप्त्यभावविषयं द्रष्टव्यम्।अपराह्णव्यापिन्यामुत्तरतिथेर्ग्राह्यतामाह हारीतः—

"अपराह्णः पितॄणां तु याऽपराह्णानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वास्वल्पयायिनी ॥"

बृहस्पतिरपि—

"मध्याह्नाद्या त्वमावास्या परस्तात्तु प्रवर्तते ।
भूतविद्धा तु सा ज्ञेया न सा पञ्चदशी भवेत् ॥"—इति ।

अत्र मध्याह्नादूर्ध्वमपराह्णमतिक्रम्य परस्तादमावास्या प्रवर्त्तते इति व्याख्येयम्। तदेतद्वचनद्वयं परेद्युरेवापराह्णव्याप्तौ योजनीयम् । यत्तु कात्यायन वचनम् ।

"पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयेंशे नातिसन्ध्यासमीपतः ॥"

इति। पिण्डानां पितृयज्ञाङ्गभूतानामनु पश्चादाह्रियतेक्रियत इति पिण्डान्वाहार्यकं श्राद्धममावास्यंतं क्षीणे राजनीन्दौ कर्त्तव्यम्। वासरस्य तृतीयेंश इत्यनेनेपञ्चधोऽपराह्णःसायाह्न-सहितोऽभिधीयते। तत्र 'नातिसन्ध्यासमीपतः इति सायाह्नस्य प्रतिषेधे सत्यपराह्णः कर्मकालत्वेन परिशिष्यते । तथाच कर्मकालव्यापिनी तिथिर्ग्राह्येत्युक्तम् । तत्रेन्दुक्षयस्य चतुर्दश्या अष्टमेंशे प्रारम्भोऽमावास्यायाः सप्तमे प्रहरे समाप्तिरेतदुभयं कात्यायन आह—

"अष्टमेंशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमेंशे च पुनः किल भवेदणुः॥"—इति ।

यत्तु जाबालिनोक्तम्—

"प्रतिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि ।
भूतविद्धैव सा ज्ञेया पितृकर्मणि सर्वदा ॥"—इति ।

अत्र पूर्वाह्णव्यापिनी तिथिरिति विशेषकथनादपराह्ण-

पिनी भूतविद्धोपादेया तथा प्रतिपद्विद्धापि कुतपव्याप्त्यो-पादेया भवति । यच्च बौधायन आह-

"घटिकैकाप्यमावास्या प्रतिपत्सु न चेत्तदा ।
भूतविद्धैव सा ग्राह्या दैवे पित्र्ये च कर्मणि ॥"

इति प्रतिपत्सु घटिकैकापि कर्मकालसम्बन्धिनी यदि न स्यादित्यर्थः । तदेतद्वचनं पूर्वेद्युरेवापराह्णव्याप्तौ द्रष्टव्यम् ॥ अस्मिन्नेव विषये जाबालिराह-

"प्रतिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि ।
भूतविद्धैव सा ग्राह्या पित्र्ये कर्मणि सर्वदा॥"-इति ॥

यत्तु हारीतवचनम्-

"कन्यामकरमेषेषु तुलायां मिथुने तथा ।
भूतविद्धैव सर्वेषां पूज्या भवति यत्नतः ॥"

इति । तद्व्रतविषयमिति माधवः । तर्पणादिविषयमिति दीपिका ।

"अरुणोदयवेलायाममावास्या यदा भवेत् ।
स कालः परमो ज्ञेयः पितॄणां दत्तमक्षयम् ॥"

इति बृहस्पतिवशिष्ठवचनात् । पूर्णिमाया अप्येवं निर्णयः । अपरपक्षश्राद्धानामपि पार्वणत्वादेष एव निर्णयस्तेष्वप्युपयोगी भवितुं शक्यः । अपरपक्षेऽन्यत्र च मघात्रयोदशीश्राद्धनिषेधः । स चैकोद्दिष्टविषय इत्ये

के । युगादिविषय इत्यपरे । काम्यश्राद्धविषय इत्यन्ये । पुत्रवद्गृहिविषय इत्येके । पुत्रवदपुत्रवतोरपि निषेध इति बहवः । वस्तुतोऽपिण्डकं तत्र श्राद्धं कार्यमिति युक्तमिति वयं प्रतीमः । तत्र चतुर्दशीश्राद्धं तु शस्त्रादिहतानामेव ॥

इति श्राद्धकालनिर्णयः ।

## अथाशौचकालनिर्णयः ।

तत्राशौचं नाम पुरुषनिष्ठः स्नानाद्यपनोद्यःकश्चिद्भावरूपो धर्म्मःतत्कालनिर्णयो निर्णयसिन्धौ मरीचिनोक्तः—

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥
स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम् ।
पाते मातुर्यथामासं सपिण्डानां दिनत्रयम् ॥

यद्यप्यनेन चतुर्थमासे त्रिरात्रं प्राप्नोति । तथापि "षण्मासाभ्यन्तरे यावद्गर्भस्रावो भवेद्यदि । तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥" इत्यादि ब्रह्मपुराणात् । "रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति" इति मनूक्तेः "गर्भस्रावेयथामासमचिरे तूत्तमे त्रयः" इति मरीच्युक्तेश्च चतूरात्रं ज्ञेयम् । अचिरे आद्यमासत्रये उत्तमे ब्राह्मणजातौ ब्राह्मण्याम् । इदं तु स्रावनिमित्तं मातुरेव न सपिण्डानाम् । तेषां तु स्नानमात्रेण शुद्धिः । "स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम्" ॥ इति स्मृत्यन्तरोक्तेः ।

"सद्यः शौचं सपिण्डानां गर्भस्य पतने सति" ॥

इति स्मरणात्।पतनं स्रावः।सद्यःपदं स्नानपरम्।पञ्चमषष्ठ-योर्मासयोस्त्रिदिनं सपिण्डा अशुचयो मातुर्मासमशुचित्वम् । "पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्" इति वचनात् ।

निर्गुणपरमिदम् । गुणवतस्त्वेकरात्रम् ।

"अजातदन्ते तनये शिशौ गर्भच्युते तथा ।
सपिण्डानां तु सर्वेषामेकरात्रमशौचकम् ॥"

इति निर्णयसिन्धौ यमोक्तेरिति मदनपारिजातः । सप्तमाद्यप्रसवे जननाशौचं दशाहम् । प्रयोगपारिजाते तु पुंस प्रसवे दशाहं, कन्याप्रसवे तु त्र्यहम् ।

"स्त्रीजन्मनि सपिण्डाश्च सोदकश्च त्र्यहाच्छुचिः ॥
स्त्रीषु त्रिपुरुषं ज्ञेयं सपिण्डत्वं द्विजोत्तमाः"

इत्यग्निस्मृतेः ॥ एतत्सर्ववर्णविषयम् ।

"तुल्यं वयसि सर्वेषामतिक्रान्ते तथैवच" ।

इतिव्याघ्रोक्तेः । जन्माशौचमध्येनालच्छेदनानन्तरं यदि बालमरणमथवानिष्प्राणो निष्पतेत् तदा जन्मनिमित्तं सम्पूर्ण-माशौचमस्त्येव न मरणाशौचेन जन्माशौचानिवृत्तिः ।

तथा च बृहन्मनुः—

"दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते" ॥

इति।यदि जन्मानन्तरं नालच्छेदात्प्राक्मरणं तदापित्रादी-नां त्र्यहेणैव शुद्धिः । मातुस्तु सम्पूर्णं जन्माशौचं स्यात् ॥

"जीवञ्जातो यदि ततो मृतः सूतक एव तु।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रिकम्" ॥

इतिमनूक्तेः।अत्रादिशब्देनमातॄणां ग्रहणम्।इदं च प्रसवाशौच-मेव।मरणनिमित्तं स्नानमात्रमेव "प्राङ्नामकरणात्सद्यःशौचम्" इति शङ्खोक्तेः।वस्तुतस्तुजननाशौचमध्ये मरणनिमित्तकसद्यः-शौचाद्याशौचान्तरोपनिपातेतेनैवजननाशौचंबाध्यते।"मरणो-त्पत्तियोगे तु गरीयोमरणं भवेत्।" इति मित्रमिश्रकृतयाज्ञ-वल्क्यस्मृतिटीकास्थकौमात् । दशाहाभ्यन्तरेइति मनु-वचनस्यायमर्थः। जननाशौचे दशाहमध्ये यदि बालमरणं तदा बान्धवैः सपिण्डैर्बालमरणाशौचं न कर्त्तव्यम्। "प्राङ्ना-मकरणात्सद्यः" इति शङ्खस्मरणात्।सूत्याशौचं सूतेःसूतिका-या दशाहाऽस्पृश्यत्वलक्षणमशौचं विधीयते न तन्मरणाशौच-बाध्यम्। तस्य रजस्संबन्धनिमित्तकत्वेन भातिरिक्तत्वात्। "अन्तःसूतके चेदोत्थानाद्"इति पारस्करसंवादाच्च। अन्तः-सूतकइत्यस्यार्थः अन्तःसूतकेजननाशौचमध्ये शावाशौचं चेद् आ उत्थानाद्दशमदिनं यावदशौचं भवति। इदञ्च आ उत्था-नादित्यभिधानान्मातुरेवअन्येषां सद्यःशौचमेव ॥ पित्रादीना-मित्यस्यायमर्थः—सूतिकासंसर्गिणां पित्रादीनां त्रिरात्रम्।

"सम्पर्काज्जायते दोषो नान्यो दोषोस्ति वै द्विजे ॥
तस्मात्सर्वप्रयत्नेन सम्पर्कं वर्जयेत्सुधीः"
इति पराशरस्मृतेः ॥

"नाशौचं सूतके पुंसः संसर्गं चेन्न गच्छति ।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते"

इत्यङ्गिरस उक्तेश्च। नामकरणादूर्ध्वं दन्तजननात्प्राक् परेतेऽग्निदग्धे एकरात्रम् ।

"अहस्त्वदन्तकन्यासु बालेषु च विशोधनम्" इति वचनात् अदग्धे तु स्नानमात्रमेव । "आदन्तजन्मनः सद्यः" इति याज्ञवल्क्यस्मरणात् ।

दाहविकल्पाँश्चाह लौगाक्षिः–

"तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम्॥" इति ।

मनुरपि–

"नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ॥
जातदन्तस्य वा कुर्यान्नाम्नि वापि कृते सति" ।

इति । उदकमत्र दाहोपलक्षणम् ।

याज्ञवल्क्यस्तु–

"ऊनद्विवार्षिकं प्रेतं निखनेत्"इति दाहाभावमेवाह ।

"दन्तोत्पत्त्यनन्तरं प्राक् त्रिवर्षान्तान्मृतेऽह्नः, दन्तजातेऽप्यकृतचूडे त्वहोरात्रेण शुद्धिः" इति विष्णूक्तेः–

"नृणामकृतचूडानामशुचिर्नैशिकी स्मृता ।"

इति मनूक्तेश्च।

कृतचौले तु त्रिरात्रम्।

"निवृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते।"

इति मनूक्तेः।

"निवृत्तचूडकानामि"त्युक्तेः प्रथमाब्देऽकृतचूडस्यापि त्रिरात्रम्। त्रिवर्षोर्ध्वं कृतचूडेऽकृतचूडे वा यावदुपनयनं मृतौ विशेषेण त्रिरात्रम्। एतत्सर्वं सपिण्डानां मातापित्रोस्तु दशाहोर्ध्वं मृते सर्वत्र त्रिरात्रम्। "बालानामजातदन्तानां त्रिरात्रेण शुद्धिः" इति काश्यपोक्तेः।

"बैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम्।"

इति मनूक्तेश्च। गौडास्तु—

"अजातदन्तमरणे पित्रोरेकाहमिष्यते।
दन्तजाते त्रिरात्रं स्याद्यदि स्यातां तु निर्गुणौ॥"

इति कौर्मात्। काश्यपोक्तं शूद्रपरम्—

"त्रिरात्रं तु भवेच्छूद्रे षण्मासेऽपि शिशौ मृते।"

इति मात्स्योक्तेः।

"दन्तजातशूद्रे तु पञ्चाहः। यथाहाङ्गिराः—
शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पञ्चभिः॥
अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते॥
षड्वर्षान्तमतीतो यः शूद्रः स म्रियते यदि।

मासिकं तु भवेच्छौचमित्याङ्गिरसभाषितम्॥"इति अनूढभार्यशूद्रस्य द्वादशाहमाशौचं तु सगुणपरम् । नामकरणादूर्ध्वं चौलात्प्राङ्मृतासु कन्यासु स्नानमात्रम् ॥

"अचूडायां तु कन्यायां सद्यः शौचं विधीयते"

इत्यापस्तम्बोक्तेः। वाग्दानतः प्रथमं चूडाकरणादनन्तरमह्नैकेन ज्ञातिः शुध्येत् ।

"अविशेषेण वर्णानामर्वाक्संस्कारकर्मणः।
त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते॥"

इत्याङ्गिरसा त्रिरात्रविषयेऽह्नोविधानात् । वाग्दानोत्तरं प्राग्विवाहान्मृतौ सप्तपुरुषावधि भर्तृगोत्रं पितृगोत्रं च त्रिभिर्दिनैः शुध्येत् ।

"स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः"

इत्यादिमनूक्तेः। शूद्रस्यापि विवाहात्पूर्वं त्रिरात्रं शूद्रे निर्गुणेऽब्दोर्ध्वं पञ्चाहं षडब्दोर्ध्वं विवाहाभावे द्वादशाह इति गौडाः ।

सगुणानां षोडशाब्दोर्ध्वं तु विवाहाभावेऽपि पूर्णाशौचम् ॥

अथ जात्याशौचम्-

तच्च द्विजपुंसामुपनयनोर्ध्वं प्रवर्त्तते-
"त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् ।
क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ॥
त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ॥"

इति याज्ञवल्क्योक्तेः ।

गुणवतः क्षत्रियस्यापि दशाहतः परं शुद्धिमाह पराशरः—

"क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः" इति ।

स्त्रीशूद्रयोस्तु विवाहोर्ध्वं जात्याशौचम् ।

बृहत्पाराशरेण तु कलौ—

"चतुर्थे दशरात्रं स्यात्पण्निशाः पुंसि पञ्चमे ।

षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयात्॥"

इत्युक्तम् ।

सएव नामधारकविप्रस्य दशाहं सूतकमाह । तथाच-

"जन्मकर्मपरिभ्रष्टः सन्ध्योपासनवर्जितः ।

नामधारकविप्रस्तु दशाहं सूतकी भवेत्॥" इति ।

स्मृत्यन्तरे तु—

"दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके ।

त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः॥"इति ।

सपिण्डाश्चतुःपुरुषावधयः । सकुल्याः सप्तपुरुषावधयः । गोत्रजा दशपुरुषावधयः ॥

अन्यत्र—

"चतुर्थ दशरात्रं स्यात्षण्निशाः पुंसि पञ्चमे ।

षष्ठे चतुरहः प्रोक्तं सप्तमे च दिनत्रयम् ॥

अष्टमे दिनमेकं तु नवमे प्रहरद्वयम् ।

दशमे स्नानमात्रम्" इत्यादि ।

द्विजदासादीनां तु स्वाम्याशौचमाह शातातपः "तदाश्रितस्य तद्वत्स्याद्" इति । माधवहारलते–वर्णसंकराणां शूद्रवदाहतुः । मनुरपि–

"शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः" इति ।

अपध्वंसजा व्यभिचारजाः । योग्निवेदसमन्वितो ब्राह्मणः स चैकाहाच्छुध्येत्केवलवेदस्तु त्र्यहात्तद्धीनो दशभिर्दिनैरित्यादिसंकोचो होमाध्ययनपरः। एवं दत्तक्रीतकृत्रिमादिपुत्रेष्वहीनवर्णगासु स्त्रीषु च सपिण्डत्वेपि प्रसवे मरणे च पूर्वापरपित्रोर्भर्तुश्च त्रिरात्रमेव न दशाहादि । सपिण्डे तु पुत्रीकृते दशाहाद्येव । संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे। तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदा प्रसवे एकरात्रं मरणे त्रिरात्रमिति निर्णयसिन्धौ विज्ञानेश्वरापरार्कौ ॥

माधवस्तु–प्रसवे त्रिरात्रं पित्रोः, भ्रात्रादिबंधूनामेकरात्रम् ।

"दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा ।
तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिः॥"

ब्रह्मोक्तेरित्याह ॥ भ्रातृभगिन्योः परस्परं मृतौ पक्षिणी । भर्तृगृहे प्रसवे पित्रादीनामाशौचाभावः । मृतौ पित्रोस्त्रिरात्रमस्त्येव । मातामह्यांच पक्षिणी । किञ्च–

"श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले ।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥"

इति बृहस्पतिस्मृतेः। पित्रोर्मृतौ स्त्रीणां त्रिरात्रम्—

"पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत्।
त्रिरात्रेणैव शुद्धिःस्यादित्याह भगवान्यमः॥"

इति माधवीये वृद्धयाज्ञवल्क्योक्तेः।इदं दशाहान्तः। ऊर्ध्वं पक्षिणी। भ्रातुर्भगिनीगृहे तस्या वा तद्गृहे मृतौ त्रिरात्रमन्यत्र तु पक्षिणीति षडशीतावुक्तम्। दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रमनुपनीतयोरेकरात्रं मनुनोक्तम्। आचार्ये मृते त्रिरात्रं, तत्पुत्रे पत्न्यां च दिवारात्रमित्याह मनुः। श्रोत्रिये स्वगृहे मृते त्रिरात्रमेकग्रामीणे त्वेकरात्रम्। ऋत्विजि बहुकालश्रौतस्मार्त्तकर्मयाजनपरे त्रिरात्रैकरात्रे ज्ञेये।

किञ्च—

"ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि।
शिष्ये पञ्चत्वमापन्ने शुद्धिर्नक्षत्रदर्शनात्॥"

इति याज्ञवल्क्यः।गुरौ मृते त्वेकरात्रम्।असपिण्डे स्ववेश्मनि मृतेएकरात्रं, माधवमते त्रिरात्रम्। मित्रे जामातरि मातुलपुत्रे च मृते स्नानमात्रम्।कुलजे वानप्रस्थे क्लीवे च मृते स्नानमात्रम्।

स्वगृहे श्वशुरादिमृतौ शुद्धिमाह मनुः—

"दशरात्राच्छुनि मृते मासाच्छूद्रे भवेच्छुचिः।
द्वाभ्यां तु पतिते गेहमन्त्ये मासचतुष्टयात्॥" इति।
"अत्यन्ते वर्जयेद्गेहमित्येवं मनुरब्रवीत्।"
"अत्यन्तो म्लेच्छः श्वपाचकः" इति वाचस्पतिः।

द्विजमरणे तु दिनत्रयाच्छुद्धिः। गृहशुद्ध्यर्थं मृन्मयभाण्डसिद्धान्नादित्योत्सर्जनं तल्लेपादियुक्तम् । गृहपश्वादिमृतावप्येवम् ।

किञ्चाग्निदे दशाहाद्याशौचमाह दिवोदासः—

"सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्याच्छवे नरः ।
सोपि कुर्यान्नवश्राद्धं शुध्येच्च दशमेऽहनि॥" इति ।

दशम इति विप्रपरम्। युद्धमृतस्य स्नानमात्रम् । पराङ्मुखहतस्य त्रिरात्रम्। क्षतेन मृतस्यासप्ताहात्त्रिरात्रम्।अतः परं दशरात्रम् ।

स्नेहेन सवर्णनिर्हारे तदन्नाऽशने तद्गृहवासे दशरात्रम् । तदन्नानशने तद्गृहवासे त्र्यहम् । गृहाऽवासे तदन्नभक्षणे चैकाहः । भृतिग्रहणेन निर्हारे दाहे च जात्याशौचम् । विजातीये तु शवजातीयाऽशौचम् । भृतिग्रहणे द्विगुणम् ॥

अथ रात्रौ जनने मरणे वा रात्रिं त्रिभागां कृत्वाऽऽद्यभागद्वये चेत्पूर्वदिनमन्त्ये तूत्तरमिति मिताक्षरा ।

प्रागर्द्धरात्रात्प्राग्वा सूर्योदयात् पूर्वदिनमनन्तरं तूत्तरमित्यपि चोक्तमन्यैः।अत्रान्त्यपक्षो वारप्रवृत्तिपरः। रजोदर्शनेप्येवम् । अत्र देशाचाराद्वा व्यवस्थेति निर्णयसिन्धुः। सर्वमिदमाहिताग्नेर्दाहदिनात्,तद्भिन्नस्य मरणदिनमारभ्य ज्ञेयम् ।

"अनग्निमत उत्क्रान्तेराशौचादि द्विजातिषु ।
दाहादग्निमतो विद्याद्विदेशस्थे मृते सति॥"

इति निर्णयसिन्धुस्थपैठीनसिस्मृतेः ।

अथातिक्रान्ताऽशौचम् ।

तत्राशौचमध्ये जननादौ ज्ञाते तच्छेषेण शुद्धिः—

"विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् ॥

यच्छेषं दशरात्रस्य तावदेवाऽशुचिर्भवेद्" इति मनूक्तेः ।

दशरात्रस्येति विप्रपरम् ।

दशाहादूर्ध्वं ज्ञाते तु वृद्धवसिष्ठः—

"मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा ।

अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति॥" इति ।

जनने त्वतिक्रान्ताशौचं नास्त्येव "नाऽशौचं प्रसवे" इत्यादिना निर्णयसिन्धौ देवलोक्तेः ।

पितुस्तत्रापि स्नानं भवत्येव "निर्दशम्" इत्यादिमनूक्तेः।

इदमशौचं दशाहादिजात्याशौचविषयं न त्वनुपनीतादिनिमित्तत्रिरात्रादौ । 'निर्दशम्' इत्यादिमनूक्तेः ।

माधवीये देवलस्तु—

"आ त्रिपक्षात्त्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः ।

परमेकाहमा वर्षादूर्ध्वं स्नातो विशुध्यति ॥"

इत्याह । तत्रापदनापद्विषयत्वेन व्यवस्था । इदञ्चैकदेशे । देशान्तरे तु स्नानमात्रमिति पराशरः । इदं सपिण्डानां देशान्तरमृतेपीति माधवः । "अर्वाग्" इत्यादिविष्णूक्तेः। सोदकानां स्नानमात्रम् । मातापितृमरणे देशान्तरेपि संवत्सरोर्ध्वमपि दशाहादिकं पूर्णमाशौचम् ।

गौडास्तु–

पित्रोरब्दमध्ये त्रिरात्रमूर्ध्वमेकाह इत्याहुः। मातृसपत्नीषु मृतासु संवत्सरादूर्ध्वं त्रिरात्रम्।

अथाशौचसंपाते उच्यते।

तत्र दशाहाऽऽशौचमध्ये यदि दशाहाऽऽशौचं त्रिरात्रादिकं वा सजातीयं जाते जातं शावे शावं भवति तदा पूर्वशेषेण शुद्धिः–

"अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति॥"

इति याज्ञवल्क्योक्तेः।स्वल्पाशौचे पतितस्य दीर्घाशौचस्य न पूर्वेण शुद्धिरिति गौडाः। तथा प्रेताशौचे जननाशौचं चेत्तदा प्रेताशौचशेषेण जननाशौचशुद्धिः। जननाशौचमध्ये पतितस्य शावाशौचस्य तु न शेषेण शुद्धिः।

"शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी" इति षट्त्रिंशन्मतम्। यदा त्र्यहादिशावाशौचेजननाशौचं दशाहं तदोत्तरेण शुद्धिरिति षडशीतिमतम्। अपरार्केप्येवम्। क्वचित्पूर्वशेषेण शुद्धेरपवादमाह गौतमः "तत्र पूर्वाशौचस्य रात्रिशेषे यद्याशौचान्तरं पूर्वोक्तं भवेत्तदा द्वाभ्यामपरदिनाभ्यां शुद्धिः। चतुर्थप्रहरमात्ररात्रिशेषे पूर्वाशौचादधिकैस्त्रिभिर्दिनैः शुद्धिः"इति। अत्र रात्रिशब्दोऽहोरात्रपरः शातातपेनोक्तेः।

"रात्रिशेषे त्र्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात्।
अहःशेषे शुचिर्द्वाभ्यां प्रभाते त्रिभिर्दिनैः॥"

इति गौतमशंखलिखितोक्तेः ।

अथ यदि दशरात्राशौचसंनिपातेपुराऽयंदशरात्रमाशौचमा नवमाद्दिवसात्। "तत ऊर्ध्वंद्विरात्रेण व्युष्टायां त्रिरात्रेण" इति बोधायनोक्तेश्चेतिपराशरमाधवहारलताशुद्धितत्त्वादय: गौडा अप्येवम् । एतत्सर्ववर्णसमम् । किञ्च एतत्सम्पूर्णाशौचसम्पात एव।रात्रिशेषे त्रिरात्रादिसम्पाते तु पूर्वशेषेणैवशुद्धिः। पूर्वाशौचान्तर्वर्द्धितद्वित्रिदिनमध्येऽधिकाशौचान्तरपाते तु वर्धितस्याल्पत्वादाधिकेनैव शुद्धिः ॥ न च वर्धितस्य पूर्वशेषत्वं शङ्कनीयम्।रात्रिशेषपूर्वशेषशुद्ध्यपवादेनैमित्तिकावृत्तिन्यायोज्जीवनात् । पित्रोर्विशेषमाह–

अन्याशौचमध्ये पतितमातापितृसंबन्ध्याशौचस्य न पूर्वाशौचेन शुद्धिः किं तु तयोर्दशाहाशौचमेव ।
तथा च निर्णयसिन्धौ षडशीत्याम्–

"पूर्वाशौचेन या शुद्धिः सूतके मृतकेऽपि च ।
सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि॥" इति ।

यदा मातृमरणाशौचमध्ये पितृमरणं तदा मातृमरणाशौचेन शुद्धिः । पित्राशौचमध्ये मातृमृतौ पित्राशौचान्ते मातुः पक्षिणीमधिकां कुर्यात् ।

"मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥"
इति निर्णयसिन्धौ शंखोक्तेः ।

इयञ्च पक्षिणी तृतीयादिदिनपरा नाद्यदिनद्वये।
किञ्च मातुरन्वारोहणेऽपि न पक्षिणी—
"यदा नारी विशेदग्निं प्रियस्य प्रियकाम्यया।
तदाशौचं विधातव्यं भर्त्राशौचक्रमेण हि॥"
इति लघुहारीतोक्तेः॥
भर्त्राशौचोत्तरमन्वारोहणे त्रिरात्रम्—
"त्र्यहाशौचे तु निर्वृत्ते श्राद्धं प्राप्नोति शाश्वतः"
इत्यपरार्के ब्राह्मोक्तेः।

गृहीताशौचानां पुत्राणां पितुः संस्कारे मातुः सपिण्डस्य वा मरणे निर्णयः। अतिक्रान्तकालाद्धियमाननिमित्तस्य च बलवत्त्वात् मातुः पक्षिणीमध्ये पितुरेकादशाहं कुर्यादिति स्मृतिदेवयाज्ञिकादयः।

केचित्तु क्षत्रियादिपरमिदमित्याहुर्विज्ञानेश्वरादयः।

दुर्भिक्षोपद्रवाहवादिषु मुमूर्षादानादौ च नाशौचम्। उपद्रवोत्यन्तमारकः।

ब्रह्मचारिणस्तु मातापितृगुरुदाहे एकरात्रमाशौचमदाहे तदभावः। अन्यदाहे व्रतलोपः। भ्रात्रादिभिः सह भोजने तु पूर्णमाशौचम्। विवाहादौ तत्तत्कर्मारम्भोत्तरमाशौचाभावः। तत्र विवाहे नान्दीश्राद्धोत्तरमुपनयने च, देवप्रतिष्ठातडागोत्सर्गादिषु ब्राह्मणवरणोत्तरं श्राद्धे पाकोत्तरमाशौचाभावः। एवं यज्ञादिषु तत्तत्कर्मारम्भोत्तरमाशौचाभावः।

याज्ञवल्क्यः—

"ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च संग्रामे राष्ट्रविप्लवे ।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते॥"

इति । चिकित्सककारुशिल्पिप्रभृतीनां तत्तत्कर्मकरणे चाशौचाभावः ।किञ्च—

लवणमधुमांसपुष्पफलपर्णशाककाष्ठतृणजलदधिदुग्धघृततिलौषधाजिनेषु दोषाभावः।आशौचिहस्तग्रहणे तु दोष एव। क्रीते न दोषः।पक्वान्ने दोषोऽपक्वान्ने चादोषः।मातृपित्रादिमरणोत्तरं प्रथमाब्दमध्ये माङ्गल्यं श्राद्धादि च न कार्यम् । तयोराब्दाशौचात् । तथा च माण्डव्यः—

"पित्रोराशौचमब्दं स्याद्" इति । क्वचिदावश्यके "तदर्द्धं मातुरिष्यते" इति मात्रशौचसंकोचोऽप्युक्तः। स्त्रीभ्रातृपुत्रमरणे च विशेष उक्तो माण्डव्येन—

"मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ।" इति ।

अन्येन तु—

"दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये ।
प्रौढायामपि कन्यायां प्रतिकूलं न दुष्यति॥"

इत्युक्तम्। मातृमरणेशौचोत्तरंपितृश्राद्धादिकंकार्यमेवेति निर्णयसिन्धावन्यत्र च ।

मातृपित्रोर्मरणानन्तरमब्दमध्येऽस्थिक्षेपगयाश्राद्धापरपक्षश्राद्धनिषेधापवादावप्युक्तौ—

"अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपाक्षिकम् ।
वर्षमध्ये न कुर्वीत कुर्वंश्च पितृहा भवेत् ।
अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपाक्षिकम् ।
वर्षमध्येपि कुर्वीत यदि स्याद्भक्तिमान्सुतः" इति ।
भक्तिमताप्येतत्सपिण्डनोत्तरं कार्यमिति ।

किञ्च ब्राह्मणादीनां हीनवर्णानुगमने तु एकान्तरे एकाहः द्व्यन्तरे द्विरात्रं त्र्यन्तरे त्रिरात्रम् ब्राह्मणस्य शूद्रानुगमने त्रिरात्राशौचोत्तरं सुनदीस्नानोत्तरं प्राणायामशतोत्तरं च घृतप्राशनमुचितम्। शेषमिह विस्तरभिया न लिखितामिति शिवम्॥

इत्याशौचनिर्णयः ।

## अथ गुरुशुक्रास्तवृद्धत्वादिनिर्णयः—

अथ गुरुशुक्रवृद्धत्वास्तशिशुत्वे न्यूनाधिमासे वर्ज्यकर्माण्याह रामः—

"वाप्यारामतडागकूपभवनारम्भप्रतिष्ठाव्रता-
रम्भोत्सर्गवधूप्रवेशनमहादानानि सोमाष्टके ॥
गोदानाग्रयणप्रपाप्रथमकोपाकर्मवेदव्रतं
नीलोद्वाहमथातिपन्नशिशुसंस्कारान्सुरस्थापनम् ॥
दीक्षामौञ्जिविवाहमुण्डनमपूर्वं देवतीर्थेक्षणं
संन्यासाग्निपरिग्रहौ नृपतिसंदर्शाभिषेकौ गमम् ॥
चातुर्मास्यसमावृती श्रवणयोर्वेधं परीक्षां त्यजे-
द्वृद्धत्वास्तशिशुत्व इज्यसितयोर्न्यूनाधिमासे तथा"इति॥

गुरुशुक्रयोर्वृद्धत्वबाल्ययोर्दिनप्रमाणमाह स एव-
"पुरः पश्चाद्भृगोर्बाल्यं त्रिदशाहं च वार्द्धकम् ।
पक्षं पञ्चदिनं ते द्वे गुरोः पक्षमुदाहृते ॥
ते दशाहं द्वयोः प्रोक्ते कैश्चित्सप्तदिनं परैः॥" इति ।
"त्र्यहं त्वात्ययिके त्वन्यैरर्द्धाहं च त्र्यहं विधोः" इति ।
इति प्रकीर्णकनिर्णयः ।

## अथ तिथिनिर्णये प्रायशो वेधादेरुपयोगित्वात् वेधादिनिर्णीयते ।

तत्र सामान्यतो वेधमाह माधवीये पैठीनसिः-
"पक्षद्वयेपि तिथयस्तिथिं पूर्वां तथोत्तराम् ॥
त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः॥" इति।
अह्नो रात्रेर्वा पञ्चदशो भागो मुहूर्तः।तथाचैभिस्त्रिभिर्मुहूर्तैः सूर्योदयादूर्ध्वं पूर्वतिथेः सूर्यास्तात्प्रागुत्तरतिथेश्च वेधः ।
हेमाद्रिमदनरत्नादौ तु द्विमुहूर्तोप्युक्तः ।
"उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ ।
द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः॥"
इति विष्णुधर्मोक्तेः द्विमुहूर्तत्वं चानुकल्पः ।
"द्विमुहूर्तापि कर्तव्या या तिथिर्वृद्धिगामिनी ।"
इति दक्षेणापिशब्देन तथोक्तः । अयं वेधः प्रातरेव।सायं तु त्रिमुहूर्त एव ।

"यां तिथिं समनुप्राप्य यात्यस्तं यामिनीपतिः ।
सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्तैव या भवेत्॥"
इति स्कान्दोक्तेः ।

कालनिर्णयेपि-
"त्रिमुहूर्तगा तु सकलासायम्"इति।शिवरहस्येऽप्येवम्।
यानि तु-
"व्रतोपवासस्नानादौ घटिकैकापि या भवेत् ।
उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके॥"
इत्यादीनिस्कान्दादिवचनानि तानि वैश्वानराधिकरण न्यायेनाऽवयवस्तुत्यात्रिमुहूर्त्तप्रशंसापराणीति कमलाकरः। माधवोऽप्येवम् । जस्मन्तभास्करस्तु-

वैश्वानराधिकरणोदरगतित्वादस्त्ववयविस्तावकत्वम्"व्रतो-पवासनियमः"इत्यादिवाक्यानां त्वस्ति गतिः।तथा हि।एकाद-श्याद्युपवासे हरिनक्तादौ च तेषां चारितार्थ्यात् ।

अथ तिथिविशेषे निषेधप्रयोजको वेधः स्कान्दे-
"नागो द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा ।
भूतोष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ॥" इति ॥
नागः पञ्चमी। दिक् दशमी। भूतश्चतुर्दशी। अयं वेधश्चो-पवासातिरिक्तविषय इति कमलाकरः ।

कालनिर्णयकारस्तु द्वादशघटिकादिरूपोयं निन्द्यतिथि-वेध उपवासादौ निन्द्य इत्याह-"निन्द्यःस्यादुपवासकर्मणि"

ति॥अत्र वयं ब्रूमः—कमलाकरोक्तिर्नक्तैकभक्ताद्युपवासे वेधा भावपरा "नक्तादन्यविधौत्पजेदमुम्" इति कालनिर्णयोक्तेः। माधवोप्येवम्। तद्वचनानि विस्तरभियात्र न लिखितानि। जन्माष्टम्यादिवेधं तन्निर्णये वक्ष्यामः।

इति वेधः॥

सर्वत्र तिथिः सर्वापि यदहः कर्मकालव्यापिनी सैव ग्राह्या-

"कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्॥"

इति विष्णुधर्मोक्तेः। दिनद्वये तद्व्याप्त्यभावेकदेशव्याप्तौ वा युग्मवाक्यान्निर्णयः। तस्य पूर्वाबाधेनोपपत्तेः। कर्मकालस्य प्रधानत्वाच्च। युग्मवाक्यं तु निगमः—

"युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः।
रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा।
प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम्।
एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतम्॥" इति।

द्वितीया तृतीयायुता,सा च द्वितीयायुतेति सप्तयुग्मानीत्यर्थ इति निर्णयसिन्धुः॥अत्र युग्माग्न्यादिसप्तयुग्मेषु पूर्वतिथिरुत्तरतिथिविद्धा ग्राह्या।उत्तरा तु पूर्वविद्धेत्युक्तं भवतीति माधवोपि। स्मृत्यन्तरशङ्करगीतयोरप्येवम्।इदं च शुक्लपक्षे। अमाप्रतिपद्युग्मस्य पूर्णिमायाश्च तत्रैव सत्त्वादित्येके। तत्त्वं त्वमाप्रति-

पयुग्मात्कृष्णपक्षलिङ्गात्पक्षद्वयपरमिदम्। तत्तद्विशेषवाक्यैः कृष्णपक्षतिथिविशेषेऽपोद्यते इति। दशमी तूक्ता पुराणसमुच्चये—

"संपूर्णे दशमी कार्या मिश्रिता पूर्वयाथवा।" इति।

संपूर्णेशुक्लपक्षे।

"त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने।"

इति त्रयोदश्युक्ता सुमन्तुना।

कृष्णपक्षे त्वापस्तम्बः—

"प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युता।
चतुर्थीसंयुता या च सा तृतीया फलप्रदा॥
पञ्चमी तु प्रकर्तव्या षष्ठ्यायुक्ता तु नारद।
कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी॥
पूर्वविद्धा प्रकर्तव्या परविद्धा न कुत्रचित्।
दशमी चैव कर्त्तव्या सदुर्गा द्विजसत्तम॥
षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः॥" इति।

यत्तु व्याघ्रः "खर्वोदर्पस्तथा हिंस्रः" इत्यादिवाक्येन परा पूर्वा चेत्याह, तच्छ्राद्धादिविषयम्।

"द्वितीयादिषु युग्मानां पूज्यता नियमादिषु।
एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना॥"

इति व्यासोक्तेः। नियमादिषु व्रतदानादिदैवकर्मसु कर्मकालव्याप्त्यभावे कर्मोपक्रमकालगा ग्राह्या। "कर्मोपक्रमका-

लगा तु कृतिभिर्ग्राह्या न युग्मादरः" इति कालनिर्णयोक्तेरि-
ति कमलाकरेण कालनिर्णयस्थमन्यमतं तदीयत्वेन स्वी-
कृत्यप्रमाणत्वेनोपन्यस्तं स्वग्रन्थे निर्णयसिन्धौ ।

कालनिर्णयकृता तु दिनद्वये यदा कर्मकालाव्याप्तिः
स्पर्शो वा तदा युग्मवाक्यान्निर्णयः । यदि कर्मकालमुभयी
व्याप्नोति नो वा स्पृशेत् "अल्पं तु व्यहगास्पृशेयदि तदा ग्राह्ये-
व युग्माह्वया" इति यदैकस्मिन्दिने कर्मोपक्रमकालगा नान्य-
स्मिंस्तदा कर्मोपक्रमगैव ग्राह्या न तत्याग इत्यस्य विपर्यं
परित्यज्य युग्मवाक्योपपत्तेर्युग्मानादरेण कर्मोपक्रमकालगेव
तिथिर्ग्राह्येति केषांचिन्मतं तदुपन्यस्य कर्मेत्यारभ्य ब्रुवत
इत्यन्तेन ग्रन्थेन ।

"कर्मोपक्रमकालगा तु कृतिभिर्ग्राह्या न युग्मादरः ।
इत्येके ब्रुवतेऽथ कर्मसमये कृत्स्नाऽल्पके वा भवे ।
यैका सा खलु शस्यते व्रतविधौ युग्माभिधाने तदा ॥"

इति । अथेति । अथ उभयदिने कर्मकाले संपूर्णाऽल्पा
वा भवेत्तदा युग्मवाक्यान्निर्णयः नेतरेणेति उक्तम् तदेव
कमलाकरस्याप्यभिमतम् । न जाने किं निमित्तमुपादाय
तेन तन्मतमपलपितम् । अत्र विशेषस्तत्रतत्र वक्ष्यते ।

उपवासलक्षणमाह वशिष्ठः–

"उपवासः स विज्ञेयः सर्वभोगविवर्जनम् ।"

इति । निराहार उपवासः । स चाहोरात्रसाध्यः ।

इत्युपवासनिर्णयः ।

## अथैकभक्तनिर्णयः।

तत्रैकभक्तव्रतं त्रिविधं स्वतन्त्रमन्याङ्गमुपवासप्रतिनिधिरूपं चेति। अत्र दिनार्द्धस्यापि सार्द्धमुहूर्तपरिमितः कालः। पञ्चधा विभागे मध्याह्नस्यापरभाग एकभक्तस्य मुख्यः कालः। दिनार्द्धेतीते सति समनन्तरभावित्वादस्तमयात्प्राचीनो गौणः इतिमाधवः।

दीपिकायान्तु त्रिधा विभक्तदिनस्य यो मध्यांशस्तस्यान्त्यदलं मुख्यः कालस्ततोर्कास्तावधिर्गौणः काल उक्तः। मध्याह्नान्त्यदले" इत्यादिकालनिर्णयोक्तेः।

निर्णयामृतकारस्तु पञ्चधा विभक्तस्याह्नस्तृतीयो भागः षड्घटिकात्मको मध्याह्नः, तत्राप्युत्तरस्थितघटिकात्रये एकभक्तं कार्यमित्याह।

कमलाकरस्तु षोडशसप्तदशादिदण्डाः मुख्यः कालः। तत सूर्यास्तपर्यन्तं गौण इत्याह।

जस्मन्तभास्करस्तु षोडशसप्तदशाष्टादशघटिकारूपो मुख्य इत्याह॥ मम तु एवं भाति—त्रिधा विभक्तस्याह्नो मध्यं मध्याह्नः स एवैकभक्तव्रते मुख्यः कालः।

"तस्मै ह स्म पूर्वाह्णे देवा अशनमभिहरन्ति मध्यंदिने मनुष्या अपराह्णे पितरः" इति शतपथश्रुतेः।

"मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिः।
उदये तूपवासस्य नक्तस्यास्तमये तिथिः॥
मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिः।"
इति पद्मपुराणबौधायनवचनाभ्याम्।

मध्याह्नादुपरितनः सार्द्धमुहूर्तद्वयात्मकः कालो मुख्यः । तदूर्ध्वं सूर्यास्तादर्वाक् त्रिमुहूर्तात्मकसायंकालात्पूर्वो भागो-गौणः । तथा च

हेमाद्रौ स्कन्दपुराणम्—

"दिनार्द्धसमयेतीते भुज्यते नियमेन यत् ।

एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि ॥" इति ॥

अत्र 'दिवैवहि' इति यदुक्तं तन्मुख्यकालेदैवाद्भोजनाभावे तदुत्तरं भोजनेसूर्यास्तावधिकस्यानिषिद्धस्य गौणकालस्य परिग्रहार्थम् 'अतीते' इत्यनेन दिनार्द्धपूर्वकालस्य व्यावृत्तिः कृतेति । अत्र निर्णतव्यविषयः षोढा भिद्यते । पूर्वेद्युरेव मध्याह्नव्यापित्वं परेद्युरेव तद्व्यापित्वमुभयत्र तद्व्यापित्वमुभयत्र तदव्यापित्वमुभयत्र साम्येन तदेकदेशव्यापित्वमुभयत्र वैषम्येण तदेकदेशव्यापित्वं चेति ॥ तत्र प्रथमद्वितीययोर्मध्याह्नव्यापित्वस्य निर्णायकत्वम्। तृतीये पूर्वविद्धा ग्राह्या । मुख्यकालव्याप्तेः समत्वेन गौणकालव्याप्तेराधिकत्वात् । अनेनैव न्यायेनोभयत्र मुख्यकालव्याप्त्यभावेपि गौणकालव्याप्तिलाभात्पूर्वाविद्धैव । पञ्चमेप्ययमेव न्यायो योज्यः । षष्ठे तु यदा पूर्वेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदाधिक्याद्गौणकालव्याप्तेश्च पूर्वेद्युर्ग्राह्या । यदा परेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदा गौणकालव्याप्त्यभावेपिमुख्यकालव्याप्त्याधिक्यानुसारेण परेद्युर्ग्राह्येति माधवः । कमलाकरोप्येवम् । तृतीयपक्षे युग्मवा-

क्यान्निर्णय इति हेमाद्रिदीपिकाकारौ। रामप्रकाशस्तु पूर्व दिने मुहूर्तन्यूनकालव्यापनं चेत्तदा माधवहेमाद्रिमतमेव सम्यक्। यदि च मुहूर्तन्यूनं मुख्यकालैकदेशं पूर्वदिने व्याप्नोति परदिने च सपादमुहूर्तादिमुख्यकालं तदा युग्मवाक्या न्निर्णय इत्याह।

इति स्वतन्त्रैकभक्तनिर्णयः ॥

अथान्याङ्गोपवासप्रतिनिध्येकभक्तनिर्णयः ॥

अन्याङ्गे उपवासप्रतिनिधौ च तदनुसारेण निर्णय इति कमलाकरः।

कालनिर्णयकारस्तु अन्याङ्गे उपवासप्रतिनिधौ च नायं नय इत्याह।

तथाच "नान्याङ्गेऽयमभोजनप्रतिनिधौ नक्तैकभक्ते नयः" इतिः। निर्णयामृतकारोप्येवम्।

माधवस्तु अन्याङ्गे स्वतन्त्रैकभक्तवन्निर्णयः। उपवास-प्रतिनिधौ तु तदुपवासतिथौ कार्यम्। तस्य गौणोपवासत्वादि-त्याह।मम तु एवं भाति । अन्यस्य तत्तद्देवपूजनदानादे-रङ्गिनोऽङ्गमिति व्युत्पत्तेर्देवपूजनादिसमाप्तिकाल एव मुख्यः कालः, ततोऽर्कास्तपर्यन्तं गौण इति। सत्येवम्—

"दिनार्द्धसमयेतीते भुज्यते नियमेन यत्।
एकभक्तमिति प्रोक्तमतस्तस्माद्दिवैव हि ॥"

इति स्कन्दपुराणवचनमनुगृहीतं, सर्वैः सहाविरोधश्च भवति । उपवासं प्रक्रम्य रोगादिना तदशक्तौ तत्र गुर्वनुज्ञया पयोमूलफलाद्यशनमुपवासप्रतिनिधिः । तत्र गुर्वनुज्ञाकाल एव मुख्यः कालः "गुरोर्वचनमौषधम्" इति शास्त्रादिति शम् ।

## अथ नक्तं निर्णीयते ।

अत्र नक्तशब्दो भोजनपरः । कालपरत्वे 'तस्यां नक्तं प्रकुर्वीते'त्यादौ प्रकुर्वीतेत्यस्यानन्वयात् नहि कालः केनचित्कर्तुं शक्यते तस्य भोजनस्य रात्राविति कालविधिरतो दिवाभोजनराहित्ये सति रात्रिभोजनं व्रतस्य स्वरूपमन्यथा स्वतः प्राप्तस्य रात्रिभोजनस्य विधानवैयर्थ्यात् तस्य रात्रिभोजनस्य विष्ण्वादिपूजनमङ्गः । तत्तत्संनिधौ पठितत्वात् । तथा होमाद्यपि तदङ्गम् 'होमं च तत्र कुर्वीत' इत्यभिधानात्। एवञ्च सति प्रधानविरोधेन पूजाहोमादेरङ्गस्य दिवानुष्ठानमर्थादुक्तं भवति ।

प्रधानस्य च नक्तस्य कालद्वयं भविष्ये दर्शितम् ।
"मुहूर्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः ।
नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप ॥" इति ।
अस्य च कालद्वयस्याधिकारिभेदेन व्यवस्थामाह देवलः-
"नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतम् ।
यतेर्दिनाष्टमे भागे रात्रौ तस्य निषिध्यते॥" इति।

स्मृत्यन्तरेपि—

"नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः ।
यतिश्च विधवा चैव कुर्यान्नक्तं सदिवाकरम् ॥
सदिवाकरं तु यत्प्रोक्तमन्तिमे घटिकाद्वये ।
प्रदोषोस्तमयादूर्ध्वं घटिकाद्वयमिष्यते ।

इति वत्सोक्तेः ।

"निशानक्तं भुवि ज्ञेयं यामार्द्धे प्रथमे सदा।" इति ।

इदं भिक्षोर्दिनांशेऽष्टमे इति कालनिर्णयेपि ।

रात्रिनक्तभोजने व्यासः—

"त्रिमुहूर्तः प्रदोषःस्याद्रवावस्तं गते सति ।
नक्तं तु तत्र कुर्वीत इति शास्त्रस्य निश्चयः॥"

इति । तदेवं नक्तकालौ व्यवस्थितौ ।

तत्र विशेषमाह वत्सः—

"प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः ।
एकादशीं विना सर्वा शुक्लेकृष्णे तथा स्मृता॥" इति ।

एकादश्यां तु यन्नक्तं तत्रोदयव्यापिनी ग्राह्या । तस्य हरिनक्तत्वात् । तदुक्तं स्कान्दे—

"प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः ।
उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः" इति ।

अत्राप्येकभक्तन्यायेन षोढा विषयभेदा उत्प्रेक्षणीयाः । मध्याह्नप्रदोषयोरेव भिन्नत्वात् । पूर्वेद्युरेव प्रदोषव्याप्तौ पूर्वा

परेद्युरेव प्रदोषव्याप्तौ परा उभयत्र प्रदोषव्याप्तौ परा।

"सदैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथिः।

तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः॥"

इति कालादर्शे जाबाल्युक्तेः। उभयत्रापि दिवा रात्रौ च सा तिथिर्विद्यते यतोऽत इत्यर्थः।

उभयत्र प्रदोषव्याप्त्यभावेऽपि परैव। तदाह जाबालिः—

"अतथात्वे परत्र स्यादर्वागस्तमयतो हि सा।"

इति। प्रदोषे तदभावेऽप्यस्तमयादर्वाग्यतः सा विद्यते ततः सा ग्राह्येत्यर्थः।

साम्येन वैषम्येण दिनद्वये मुहूर्तान्यूनप्रदोषैकदेशव्याप्तौ परेद्युरेव नक्तं, सायंकालस्य गौणस्य तत्तिथिव्याप्तत्वादिति माधवः।

वस्तुतस्तु एषा कोटिरप्रयोजिकैव। तथा हि। मुहूर्तान्यून-कालत्वेन प्रदोषव्यापितिथिसत्त्वे सुतरां परदिन एव नक्तं तत्साम्यवैषम्ययोरप्रयोजकतयोभयदिने प्रदोषव्याप्तिस्वरूपतृतीयकोटावेवास्य निवेशान्नास्याः कोटेः स्वातन्त्र्यमिति रामप्रकाशः।

अस्य च दिवारात्रिव्रतत्वेन प्रदोषव्याप्तिवत्सायंकाल-व्याप्तिरपि निर्णयहेतुर्भवति। दिवारात्रिव्रतत्वञ्च कूर्मपुराणेऽभिहितम्।

"प्रदोषव्यापिनी यत्र त्रिमुहूर्ता यदा दिवा।"

कालव्याप्तिस्तु पश्चान्निर्दिष्टेति विवेकः । तेष्वितरनक्तेषु प्रदोषव्यापितिथिग्रहणेऽपि भानुवासरसंक्रान्त्यादिना गृहस्थस्यापि यदा रात्रिभोजननिषेधस्तदा सोऽपि दिवैव नक्तं कुर्यात् । तथा च भविष्यपुराणे—

"ये चादित्यदिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः ।
दिनान्ते तेपि भुंजीरन्निषेधाद्रात्रिभोजने ॥" इति।

अस्मिंश्च दिवाभोजने उत्तमो मुहूर्तः मध्यम उपान्त्यः । ततः प्राचीनो जघन्यः । एवं सत्यन्तिमभागत्रिमुहूर्तवचनान्युपपद्यन्ते । रात्रिभोजनेऽपि घटिकात्रयमुत्तमः कालः घटिकाषट्कं मध्यमः। एतदेवाभिप्रेत्य वचनं स्मर्यते—

"प्रदोषोऽस्तमयादूर्ध्वं घटिकात्रयमिष्यते ।
त्रिमुहूर्तं प्रदोषः स्याद्रवावस्तं गते सति ॥"

इति । निशीथपर्यन्तो जघन्यः 'नक्तं प्रकुर्वीत रात्रौ' इति सामान्येनाभिधानात् । असौरनक्तेषु सामान्येन वैषम्येण वा दिनद्वये प्रदोषैकदेशव्याप्तौ परेद्युरेव नक्तं कार्यं सायंकालस्य गौणस्य तत्तिथिव्याप्तत्वात् । अनेनैव न्यायेन सौरनक्तेषु सायंकालैकदेशव्याप्तौ पूर्वा तिथिर्ग्राह्या । प्रदोषकालस्य गौणस्य तत्तिथिव्याप्तत्वात् ।

यत्तु 'नो हेयं विहितत्वतो व्रतवताप्यादित्यवारादिषु' इति निर्णयकारो न रात्रिनक्तमादित्यवारादौ त्याज्यमित्याह, तत्सौरनक्तातिरिक्तभावादित्यवारपरम् । अत्रापि एकभक्तवदन्याङ्गनक्तोपवासस्थानीयनक्तयोर्निर्णयो द्रष्टव्यः। यथोक्त-

"तदा नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत् ।" इति ।
यद्यप्यत्रप्रदोषसायं कालौ द्वावपि प्रयोजकौ प्रतिभासेते तथापि प्रदोषव्याप्तिर्मुख्यः कल्पः । सायंकालव्याप्तिरनुकल्प इति जाबालिवचनादवगम्यते तत्र ह्यतथात्वम् इति प्रदोषव्याप्त्यभावमनूद्य तादृशास्तिथेर्ग्राह्यत्वम् । अर्वागस्तमयात इति हेतूपन्यासात् ।

ईदृशेपि विषये गृहस्थोपि यतिवद्दिवानक्तमाचरेत् ।
तदुक्तं स्कान्दे—

"प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते ।
आत्मनो द्विगुणां छायामतिक्रामति भास्करे ॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् ।
एवं ज्ञात्वा ततो विद्वान्सायाह्ने तु भुजिक्रियाम् ।
कुर्यान्नक्तव्रती नक्तं फलं भवति निश्चितम् ॥" इति ।

यत्तु सप्तमीभानुवारादौ सौरनक्तं विहितं, तत्र पूर्वोक्तेन सायंकालव्याप्तिर्मुख्यः कल्पः । प्रदोषव्याप्तिरनुकल्पः । तदेवाभिप्रेत्य सुमन्तुः—

"त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः ।
तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनम् ॥" इति ।

अत्र सायंव्याप्तेर्मुख्यकालत्वात्प्रथमतो निर्देशः । प्रदोषव्याप्तेरनुकल्पत्वात्पश्चान्निर्देशः । इतरनक्तेषु तु प्रदोषव्याप्तेर्मुख्यत्वादुदाहृतकूर्मपुराणवचने सैव प्रथमं निर्दिष्टा, सायं-

## अथायाचितं निर्णीयते।

तत्र पूर्वोदाहृते सप्तमीव्रते पञ्चम्यामयाचितं विहितं तस्यैकभक्तवत्प्रतिपदोक्तः कालविशेषविधिर्नास्ति तस्य याचितपानभोजननिषेधरूपत्वात्। स च निषेध उपवासवदहोरात्रं विषयीकरोति। अत एव सङ्कल्पोपि अस्मिन्नहोरात्रे याचितमन्नं न भोक्ष्ये इत्येव कर्तव्यः।अथ वा याचितादन्यदयाचितमित्यत्राप्रयत्नलब्धस्य परदत्तस्य भोजनं विवक्ष्यते।तदापि पराधीनत्वादेव तस्य नक्तकालविशेषो विधातुं शक्यते। यद्यपि स्वगृहे पूर्वसंचितं वसु इदानीमयाचितं भवति तथापि पूर्वप्रयत्नसंपादितं तद्याचितमेव विषयीकरोति। अथ वा निषेधस्य प्रसक्तिपूर्वकत्वात् याञ्चाप्रसक्तेश्च परद्रव्यविषयत्वात् अयाचितशब्दोपि परद्रव्यमेव विषयीकरोति। अत्रायाचितशब्दस्य द्वावर्थौ सम्पन्नौ प्रतिषेधः पर्युदासश्च। तयोरुभयोः प्रतिषेधं प्राजापत्यकृच्छ्रव्याख्याने गौतमो व्याजहार—

"अथापरं त्र्यहं न कञ्चन याचेत" इति।

पर्युदासपक्षं बृहस्पतिर्व्याजहार—

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परं तु नाश्नीयात्प्राजापत्यं चरन्द्विजः"॥ इति।

स्मृत्यन्तरेपि—

"अयाचिताशी मितभुक्परां सिद्धिमवाप्नुयात्।"

इति मितभोजित्वम्। तदुक्तं चतुर्विंशतिमते—

"प्रातस्तु द्वादश ग्रासा नक्तं पञ्चदशैव तु।
अयाचिते तु द्वौ चाष्टौ प्राजापत्यविधिः स्मृतः॥"

लक्षणलक्षितयोरेकभक्तनक्तयोरेकस्मिन्दिने यदा प्रसक्तिस्तदा कथं कर्तव्यम् । नचैतादृशी प्रसक्तिरेव नास्तीति शङ्कनीयम्, भविष्यपुराणोक्ते रथसप्तमीव्रते कदाचित्तत्प्रसक्तेः। तथा हि तत्र तृतीयादिसप्तम्यन्तेषु पंचसु दिनेषु क्रमेण नक्तैकभक्ताऽयाचितोपवासपारणानि विहितानि। अत्र यदा तृतीया यामत्रयपरिमिता तत ऊर्ध्वं चतुर्थी तदा मध्याह्नव्यापित्वात्तृतीयैकभक्तं तत्राप्याप्तं, प्रदोषव्यापित्वाच्चतुर्थीनक्तमपि तथैव। तथा सति परस्परविरोधो दुष्परिहरः। अत्रोच्यते। एकभक्तस्य प्राथम्यात्प्राबल्येन तस्मिन्मुख्यकाल एवानुष्ठेयः । तद्विरोधिनि तु नक्तेऽनुकल्पः। स च द्विधा दिनान्तरानुष्ठानात्, कर्त्रन्तरानुष्ठानाच्च। यदा चतुर्थी परेद्युर्वृद्ध्या सायंकालं व्याप्नोति तदा तस्य गौणकालत्वादेक एव कर्ता दिनभेदेन व्रतद्वयमनुतिष्ठेत्। यदा चतुर्थी समा क्षीणा तदा गौणकालस्याप्यसम्भवेन पूर्वेद्युरेव भार्यापुत्रादिना कर्त्रन्तरेण तन्नक्तं कारणीयम्। सूर्यास्तादुपरि त्रिदण्डसन्ध्योत्तरं भोजनं कार्यमिति कमलाकरः । नक्षत्रदर्शनानन्तरमिति दीपिका।

अस्मन्तभास्करस्तु कमलाकरमतं सम्मनुते । भगवन्तभास्करमदनरत्नकारौ—

"आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ।
चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् ॥"

इति निषेधस्तु रागप्राप्तभोजनपर इत्याहतुः ।

इति नक्तम् ।

इति । तच्च भोज्यद्रव्यं परकीयमयत्नेनोपनीतं चेदित्ये तदुभयं स्मार्तलिङ्गादवगम्यते ।

तथाच प्रतिग्रहप्रकरणे याज्ञवल्क्यः–

"अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः।" इति ।

तथा यतिधर्मेषूशनाः–

'भिक्षाशनमनुद्योगात्प्राक्केनापि निमन्त्रितम् ।

अयाचितं तु तद्भैक्ष्यं भोक्तव्यं मनुरब्रवीत् ॥" इति ।

यदि प्रतिषेधः पर्युदासो वा उभयथापि एकभक्तादिवन्न कालो विशेषणीयः, प्रतिषेधेऽनुष्ठेयाभावात्, पर्युदासे पराधीनत्वात् । असति कालविशेषविधौ न कर्मकालव्याप्तिवचनमत्र प्रवर्तते । तथा सति किं 'पौर्वाह्णिकास्तु तिथय' इति वचनेन परा ग्राह्या, किंवा युग्मादिवाक्येन पूर्वेति वीक्षायां युग्मवाक्यस्य तिथिविशेषविषयत्वात्तदनुसरणमितिमाधवः।

अयाचिते तु विशेषवचनाभावादुपवासवन्निर्णय इति कमलाकरः ।

अयाचितस्यान्नस्य कदाचित्प्रातरादिकाले लाभेपि अष्टधा विभक्तदिनस्य प्रथमे भागे प्रहरद्वयोपरि अर्द्धप्रहराभ्यन्तरे अयाचितं यथाविधि भोक्तव्यं तत्कालस्य सामान्यतो हि भोजने मुख्यत्वात् सार्द्धप्रहरद्वयानन्तरं तल्लाभे तु सति सामर्थ्येऽस्तादूर्ध्वकाल एव भोक्तव्यमिति रामप्रकाशः ।

मम तु एवं भाति नित्यकर्मानुष्ठानानन्तरं यस्मिन्काले-ऽयाचितान्नोपलब्धिस्तत्रैव भोक्तव्यं तत्कालविधायकविशेषवचनाभावात् ।

इत्ययाचितम् ।

## अथ दानव्रतनिर्णयः ।

"सोदयत्रिमुहूर्तायां कुर्याद्दानं व्रतानि च ।
उभयत्र तथात्वे तु पूर्वैयुस्तदनुष्ठितिः ॥
परत्रैव तथात्वंचेत्पूर्वाग्राह्या तिथिः क्षये ।
तिथेः साम्ये च वृद्धौ च गृह्यतां तिथिरुत्तरा ।
अस्पर्शे चैकदेशस्य व्याप्तौ पूर्वैव गृह्यताम् ॥"

कर्मकालश्च प्रायशो दानव्रतयोर्दैवत्वेन पूर्वाह्णोऽवगन्तव्यः 'पूर्वाह्णो वै देवानाम्' इति श्रुतेः। अह्नः पूर्वो भागः पूर्वाह्णः सच पञ्चधा विभागपक्षे मुहूर्तत्रयात्मकः प्रातःकालः। चतुर्धा विभागपक्षे सार्द्धप्रहरात्मकः । त्रेधा विभागपक्षे पञ्चमुहूर्तात्मकः द्वेधा विभागपक्षे सार्द्धसप्तमुहूर्तात्मकः। पञ्चदशधा विभागपक्षेऽप्यर्थात्तथैव सम्पद्यते। यद्यपि बहुशास्त्रानुरोधेन पञ्चधा विभाग एवात्र ग्राह्य इति युक्तं तथापि बहुकर्तव्योपेतयोर्दानव्रतयोर्मुहूर्तत्रयमात्रेणानुष्ठातुमशक्यत्वादितरेऽपि पक्षा अनुकल्पत्वेन गृहीतव्याः । यत्र सार्द्धसप्तमुहूर्तैरपि न कर्म समाप्यते तत्र कृत्स्नदिवसोऽप्यनुज्ञायते । विशेषमत्र तत्तन्निर्णये वक्ष्यामः । दानं प्रसिद्धम् । व्रतं नियमः ।

इति । तच्च भोज्यद्रव्यं परकीयमयत्नेनोपनीतं चेत्येतदुभयं स्मार्तलिङ्गादवगम्यते ।
तथाच प्रतिग्रहप्रकरणे याज्ञवल्क्यः—
"अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः।" इति ।
तथा यतिधर्मेषूशनाः—
'भिक्षाशनमनुद्योगात्प्राक्केनापि निमन्त्रितम् ।
अयाचितं तु तद्भैक्ष्यं भोक्तव्यं मनुरब्रवीत् ॥" इति ।
यदि प्रतिषेधः पर्युदासो वा उभयथापि एकभक्तादिवन्न कालो विशेषणीयः, प्रतिषेधेऽनुष्ठेयाभावात्, पर्युदासे पराधीनत्वात् । असति कालविशेषविधौ न कर्मकालव्याप्तिवचनमत्र प्रवर्तते । तथा सति किं 'पौर्वाह्णिकास्तु तिथय' इति वचनेन परा ग्राह्या, किंवा युग्मादिवाक्येन पूर्वेति वीक्षायां युग्मवाक्यस्य तिथिविशेषविषयत्वात्तदनुसरणमिति माधवः।
अयाचिते तु विशेषवचनाभावादुपवासवन्निर्णय इति कमलाकरः ।
अयाचितस्यान्नस्य कदाचित्प्रातरादिकाले लाभेपि अष्टधा विभक्तदिनस्य प्रथमे भागे प्रहरद्वयोपरि अर्द्धप्रहराभ्यन्तरे अयाचितं यथाविधि भोक्तव्यं तत्कालस्य सामान्यतो हि भोजने मुख्यत्वात् सार्द्धप्रहरद्वयानन्तरं तल्लाभे तु सति सामर्थ्येऽस्तादूर्ध्वकाल एव भोक्तव्यमिति रामप्रकाशः ।
मम तु एवं भाति नित्यकर्मानुष्ठानानन्तरं यस्मिन्कालेऽयाचितान्नोपलब्धिस्तत्रैव भोक्तव्यं तत्कालविधायकविशेषवचनाभावात् ।

इत्ययाचितम् ।

"दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् ॥" इति ।
अरुणोदयस्वरूपं च माधवीये स्कान्दे–
"उदयात्प्राक्चतस्रस्तु घटिका अरुणोदयः" इति।
यदपि "उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता ।
संपूर्णैकादशी नाम तत्रैवोपवसेद्गृही ॥"
इति गारुडसौरधर्मादिवचनं, यच्च भविष्ये–
"आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता ।
एकादशी तु सम्पूर्णा विद्धान्या परिकीर्तिता ॥"
इति तदप्युपसंहारन्यायेन दण्डचतुष्टयपरमेव ।
हेमाद्रावप्येवम् ।
यत्तु ब्रह्मवैवर्ते–
"चतस्रो घटिकाः प्रातररुणोदयनिश्चयः ।
चतुष्टयविभागोऽत्र वेधादीनां किलोदितः ।
अरुणोदयवेधः स्यात्सार्द्धं तु घटिकात्रयम् ।
अतिवेधो द्विघटिकाः प्रभातं दर्शनाद्रवेः ॥
महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते ।
तुरीयस्तत्र विहितो योगः सूर्योदये बुधैः"॥
इति तदप्यवयवद्वाराऽरुणोदयवेधविशेषपरमेवेति माधवीयमदनरत्ने च । अन्यस्तूदयवेधः ।
तथान्येऽपि हेमाद्रौ माधवीये गारुडे–
"उदयात्प्राक्त्रिघटिकाव्यापिन्येकादशी यदा ।

चीनः कालो लक्ष्यते ऽन्यथा सुमंतुवचनेन विरोधः स्यात् ।
तथाचतद्वचनम्—

"यत्रार्द्धरात्रादर्वाक्तु नक्षत्रं प्राप्यते तिथौ ।
तन्नक्षत्रव्रते कुर्यादतीते पारणंतिथौ" इति ।

निर्णयामृतकृतदीपिकायां तु यदा पूर्वस्मिन्नेव दिनेऽस्तमयसम्बन्धि तदा तदेवोपवसनीयम् दिनद्वये सत्त्वेऽसत्त्वे वा पूर्वं यदा पूर्वेद्युरर्द्धरात्रिसम्बन्धि परेद्युरस्तमयसंबन्धि तदोत्तरमिति ।

"उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोः ।
उदये त्रिमुहूर्तस्थं नक्षत्रं व्रतदानयोः ॥
दिनद्वये तथात्वे तु पूर्वं स्याद्बलवत्त्वतः ।
श्रवणं तूत्तरं ग्राह्यमुपाकरणकर्मणि ॥
पित्र्ये तु तिथिवत्सर्वो नक्षत्रस्य विनिर्णयः ।
पूर्वः स्यादुपवासादावुत्तरो व्रतदानयोः ॥
योगः श्राद्धे कर्मकालव्यापस्तु परिगृह्यताम् ।
करणं यद्दिने तत्तु ग्राह्यं रात्रौ यदा तदा ॥
दिनद्वयेकभक्ताभ्यामुपवासः प्रसिध्यति ।
वासरे संक्षयाभावाद्गृहीतव्यं यथास्थितम् ॥"

इति नक्षत्राद्युपवासनिर्णयः ।

अथैकादश्युपवासनिर्णयः ।

तत्र दशमीवेधो द्वेधा अरुणोदयवेधः सूर्योदयवेधश्चेति ।
आद्यो गारुडे—

"दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् ॥"
इति गारुडे भविष्ये च योगमात्रे निषेधात् ।

नारदीयेपि—

"लववेधेपि विप्रेन्द्र दशम्येकादशी त्यजेत् ।
सुराया बिन्दुना स्पृष्टं गङ्गाम्भ इव निर्मलम् ॥"
स्कान्देप्येवम् ।

माधवोऽप्याह सोऽयं कलादिवेधोऽरुणोदयवेधे सूर्योदयवेधे च समान इति ।

निगमेपि—

"सर्वप्रकारवेधोऽयमुपवासस्य दूषकः॥" इति ।

अतएवमाधवेन—अरुणोदयात्यदण्डेत्यादिस्पर्शादेकादश्याः सम्पृक्तादिसंज्ञा उक्ता निषिद्धास्ततः सामान्यतो विशेषतश्चारुणोदयवेधो निषिद्धः। सच चतुर्घटिकात्मक एवारुणोदय इति सिद्धम् स च वैष्णवविषयः। तद्वाक्येषु वैष्णवग्रहणात् । अत्र शेषं निर्णयग्रन्थेभ्योऽवसेयम् ।

उदयवेधस्तु परिशेषात्स्मार्तगोचरः । तदाह माधवः—
"अरुणोदयवेधोऽत्र वेधः सूर्योदये तथा ।
उक्तौ द्वौ दशमीवेधौ वैष्णवस्मार्तयोः क्रमात् ॥"

हेमाद्रिस्तु मतान्तरेणार्द्धरात्रवेधमप्याह। स चाऽसर्वसम्मतेरुपेक्ष्यः। यश्च पञ्चदशघटिकात्मा वेधः स चोपवासातिरिक्त-

सन्दिग्धैकादशी नाम वर्ज्येयंधर्मकांक्षिभिः ॥
उदयात्प्राङ्मुहूर्तेन व्यापिन्येकादशी यदा ।
संयुक्तैकादशी नाम वर्ज्येयं धर्मवृद्धये ॥”

हेमाद्रौ रात्रेरन्त्योऽष्टमभागोऽप्यरुणोदय उक्तः–

“निशः प्रान्ते तु यामार्द्धे देववादित्रवादने ।
सारस्वतानाध्ययने वारुणोदय इष्यते ॥”

इतिस्मृतेः। अत्रैक एषां सर्वपक्षाणां मुहूर्तद्वयेन क्रोडीकारा न्निशःप्रान्त इति वचनाच्च रात्रिमानवशात्सार्द्धत्रिदण्डादयो ऽनेकेरुणोदयाः।

तदाह हेमाद्रिः–सार्द्धघटिकात्रयोक्तिरष्टाविंशतिघटिका-मानरात्रिविषया । महत्तरास्तु रात्रीरपेक्ष्य चतस्रो घटिका इत्युक्तमित्याहुः । तन्न । अरुणोदयशब्दस्यानेकार्थत्वापत्तेः । नच मुहूर्तद्वयमर्थः दण्डद्वयकमुहूर्तादिवेधानां तथाप्यनुपपत्तेः। नहि तेषां यामार्द्धत्वमरुणोदयत्वं चास्ति। मुहूर्तद्वयस्य यामार्द्धस्य च चतस्रो घटिका इत्यनेनोपसंहाराच्च न तदर्थः । न च ‘सार्द्धं तु घटिकात्रयम्’ इत्यनेनापि तदापत्तिः शंक्या । तेन चतुर्दण्डे वेधस्यैवोक्तेः । चतुर्दण्डेर्द्धघटीदशमीसत्त्वे हि वेधस्तदर्थः द्विघटिकादौ तदयोगाच्च यत्तु मतं कियता अरुणोदये वेध इत्यपेक्षायां सार्द्धघटिकात्रयनियमादरुणोदयेऽर्द्धघटिकातो न्यूनदशमीसत्त्वे न दोष इति। तत्तुच्छम्। द्विदण्डादावपि तदापत्तेः ।

इति हेमाद्रौ पाद्मवचनम्, तदेकादश्या वृद्धौ ज्ञेयम्।
तदुक्तं माधवेन—
"एकादशी द्वादशी चेत्युभयं वर्द्धते यदा।
तदा पूर्वदिनं त्याज्यं स्मार्तैर्ग्राह्यं परं दिनम्॥" इति।
विद्धैकादश्यां द्वादशीमात्रवृद्धौ च सर्वेषां परैव। तत्रैवै-
दशीमात्रवृद्धौ गृहिणः पूर्वा यतेरुत्तरा, पूर्वोक्तपाद्मात्
वता अप्येवम्।
एतच्छुद्धाविद्धातुल्यमिति माधवः—
"त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन।
उपोष्यैकादशी तत्र दशमीमिश्रितापि च॥"
इति स्कान्दात्। विष्णुरहस्येऽपि—
"दशमीशेषसंयुक्ता उपोष्यैकादशी सदा।
यदा न स्यात्त्रयोदश्यां मुहूर्तं द्वादशी तिथिः॥" इति।
भविष्येऽप्येवम्—
"अविद्धानि निषिद्धेश्च न लभ्यन्ते दिनानि तु।
मुहूर्तैःपञ्चभिर्विद्धा ग्राह्यैवैकादशीतिथिः"॥
इति ऋष्यश्रृङ्गोक्तेः। मुहूर्तपञ्चकमरुणोदयमारभ्य ज्ञेयम्।
अन्यथोत्तरेद्युरेकादश्यभावासम्भवात्। तथा च स एव—
"सर्वत्रैका दशी कार्या द्वादशीमिश्रिता नरैः।
प्रातर्भवतु मा वा भूयस्मान्नित्यमुपोषणम्॥" इति।
यदपि हेमाद्रिणा 'शुद्धसमा शुद्धन्यूना वाधिकद्वादशि-
का चेत्सर्वेषां परैवेत्युक्तं, तदपि वैष्णवविषयम्। स्मार्तानां
तु पूर्वैवेत्यविरोधः। हेमाद्रिमतेनोच्यते। तत्र—

विषय इति माधवः। यदा त्वेकादश्येव शुद्धा सती वर्द्धते द्वादशी वोभयं वा तदा वैष्णवैः परोपोष्या। 'एकादशी' इत्यादिवचनादिति माधवः। स्मार्तैस्तु सूर्योदयविद्धा त्याज्या। यदा त्वेकादशी शुद्धा सती वर्द्धते द्वादशी च समा न्यूना वा तदा गृहस्थैः पूर्वा यतिभिरुत्तरा कार्या 'प्रथम' इत्यादिस्कान्दोक्तेः। वर्द्धमानोऽप्येवम्। विद्धाधिक्ये द्वादशीसाम्ये परत्रोपवासः कालादर्शहेमाद्रिकालनिर्णयदीपिकानिर्णयामृतप्रतापमार्तण्डादीनां संमतः। किन्तु तेषां सूर्योदयवेधमादायैव विद्धाभेदव्यवस्थेति विशेषः। अत एव—

"एकादशी प्रवृद्धा चेच्छुक्ले कृष्णे विशेषतः।
उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही॥"

इति सामान्यवचनाद्विद्धाधिक्यस्थले द्वादशीसाम्येपि गृहियतिभेदाद्व्यवस्थेति माधवमतं परास्तमिति रामप्रकाशः। उभयवृद्धौ शुद्धा विद्धा वा सर्वेषां परैवेति माधवकमलाकरौ। द्वादशीमात्रवृद्धौ शुद्धायां पूर्वैवेत्यपि।

"न चेदेकादशी विष्णौ द्वादशी परतः स्थिता।
उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम्॥"

इति नारदोक्तेः।

"द्वादशीमात्रवृद्धौ तु शुद्धविद्धे व्यवस्थिते।
शुद्धा पूर्वोत्तरा विद्धा स्मार्तनिर्णय ईदृशः॥"

इति माधवोक्तेश्च मदनरत्नेप्येवम्। यत्तु—

"विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत्।
अविद्धापि च विद्धा स्यात्परतो द्वादशी यदि॥"

त्यादिपाद्मोक्तेः । विद्धाधिकसमद्वादशिका च सर्वेषां पूर्वैव ।
"पारणाहे न लभ्येत द्वादशी सकलापि चेत् ।
तदानीं दशमीविद्धामुपोष्यैकादशीं तिथिम्॥" इत्यादिऋष्य-शृङ्गोक्तेः । माधवमते त्वत्र गृहिणां पूर्वा यतेरुत्तरा। विद्धा-धिकन्यूनद्वादशिका मोक्षपापक्षयविष्णुप्रीतिकामैः परा कार्या। गृहिणा तु नक्तं कार्यम् ।

"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
उपवासं न कुर्वीत पुत्रपौत्रसमन्वितम्॥"
इति कौर्मे दिनक्षये उपवासनिषेधात् ।
"दशम्येकादशी विद्धा द्वादशी च क्षयं गता ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तु गृहिणः स्मृतम्॥"
इति शातातपोक्तेश्च

गृहिणःपूर्वत्रोपवास एकादश्याः शुद्धन्यूनत्वे शुद्धसमत्वे वा द्वादश्या न्यूनसमत्वयोरेकादश्यामुपवासः।यानि तु'दशम्यनुगता हन्ति'इत्यादीनि कौर्मादिवचनानिदशमीवेधत्रयोदशीपारणयो र्निषेधकानि तानि विहितभिन्नपराणि।अत्र मूलवचनानि तद्व्य-वस्था चाकरे स्थिता।यत्तु—हेमाद्रौ बहुवाक्यविरोधेनेत्यादि-मार्कण्डेयोक्तेः 'सन्दिग्धेषु चे' त्यादिपाद्मोक्तेश्च वेधसन्देहे ज्योतिर्विदां विमतिपत्तौ वा परा कार्येत्युक्तं तद्वैष्णवविषयम्। अत्र पुत्रवता स्मार्तेन कृष्णपक्षीयैकादशीव्रतं न कार्यं वैष्णवेन तुपुत्रवतापि कार्यमिति सर्वनिबन्धसिद्धांतः। शेषमत्र निबन्धे ष्वोऽवगन्तव्यं विस्तरभिया न लिखितमिति शिवम् ॥

"शुद्धा विद्धा द्वयी नन्दा त्रेधा न्यूनसमाधिकैः ।
षट्प्रकारा पुनस्त्रेधा द्वादश्यूनसमाधिकैः॥"

इत्यष्टादशैकादशीभेदास्तत्र शुद्धाधिकन्यूनद्वादशिका शुद्धाधिकसमद्वादशिका च सकामैः पूर्वा निष्कामैरुत्तरा कार्या 'प्रथमेऽहनि' इत्यादिस्कान्दात् । ऊनद्वादशिकायान्तु विष्णुप्रीतिकामैरुपवासद्वयं कार्यम्। 'सम्पूर्णैकादशी' इत्यादि- निर्णयसिन्धुस्थवृद्धवसिष्ठोक्तेः । शुद्धन्यूना शुद्धाधिका शुद्धसमा विद्धन्यूना विद्धसमा वाधिकद्वादशिका चेत्सर्वेषां परैवेति हेमाद्रिः । मदनरत्ने तु—शुद्धाधिका परा इति 'सम्पूर्णे' त्यादिवचनात् । अन्या पूर्वा ।

"शुद्धा यदा समा हीना समा हीनाधिकोत्तरा ।
एकादशीमुपवसेन्न शुद्धां वैष्णवीमपि ॥"

इति स्कान्दात् । 'शुद्धे'त्यादिनारदोक्तेश्च ।

यत्तु—'अविद्धे' त्यादिपाद्मवचनं, तच्छुद्धाधिकापरम् । यत्तु—'सम्पूर्ण' त्यादिवचनं, तद्वैष्णवपरम् । स्मार्तानां तु पूर्वे- त्युक्तं माधवीये ।

विद्धन्यूनासमद्वादशिका तु मुमुक्षूणां पुत्रवतां च पराऽन्येषां पूर्वा 'पुत्रवतोऽपि पूर्वा' इति मदनरत्ने। विद्धन्यूना न्यूनद्वा- दशिका च सैव सर्वैः कार्येति हेमाद्रिः । मुमुक्षूणां पराऽन्ये- षां पूर्वेति मदनरत्ने । विद्धसमा समद्वादशिकोनद्वादशिका च मुमुक्षुभिः पराऽन्यैः पूर्वा कार्या । 'दशमीमिश्रिता पूर्वा' इत्यादिव्यासोक्तेः। अत्र मोक्षकांक्षिग्रहणादन्येषां पूर्वैव सर्वत्रे-

"अमायुक्ता न कर्तव्या प्रतिपच्चण्डिकार्चने ।
मुहूर्तमात्रा कर्तव्या द्वितीयादिगुणान्विता ॥"
इति देवीपुराणादिति जस्मन्तभास्करः ।
निर्णयसिन्धुदीपिके अप्येवम्। अत्र व्रतार्के आरोग्यव्रतविद्याव्रततिलकव्रतान्युक्तानि। तेषांकालोवत्सरारम्भवदुक्तः । इयं स्नानादौ तूदयव्यापिनी । वृद्धौ परेह्नि । अत्र वर्षेशेतरनवरात्रादि चैत्रस्य मलत्वे शुद्धमास एव कार्यम् ।

द्वि०२—अत्रोमाशिवहुताशनपूजने पूर्वाह्णो मुख्यो मध्याह्नो गौणः । उभयत्र सत्त्वे परा जस्मन्तभास्करेरामप्रकाशे च । किञ्चात्ररौप्यदर्शनमुदयव्यापिन्यां,स्नानदानादि च वृद्धावुत्तरेऽह्नि । इमां द्वितीयामारभ्य प्रतिमासं शुक्लद्वितीयासु दिनान्ते वर्षपर्यंतं नदीस्नान विष्णुपूजा हवनचन्द्रपूजातदर्घदानं चन्द्रास्तादर्वाक्भोजनं चोक्तं दिवारात्रिसम्बन्धितिथौ रामप्रकाशस्थविष्णुधर्मोत्तरे ।

तृ०३—अत्र रामदोलोत्सवो रामार्चनचन्द्रिकायाम् । तत्र पूर्वाह्णव्यापिनी । इयमेवगौरीतृतीया । अत्रगौरीशङ्करपूजाऽऽन्दोलनञ्च । तत्र मुहूर्तमात्रा परयुता ग्राह्या "मुहूर्तमात्रसत्त्वेपि दिने गौरीव्रतं परे ।"
इति माधवोक्तेः ।

# चैत्रशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः।

प्रति० १-चैत्रशुक्लप्रतिपदियं वत्सरारम्भे उदयव्यापिनीग्राह्या।

तथोक्तं माधवीये ब्राह्मे—

"चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि।
शुक्लपक्षे समग्रं तु तदा सूर्योदये सति॥" इति।

व्रतार्कस्थभविष्योत्तरे च—

"प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ।" इति।

दिनद्वय उदयव्याप्तौ सम्पूर्णत्वात्पूर्वा अव्याप्तावपि पूर्वा।

"वत्सरादौ वसन्तादौ बलिराज्ये तथैव च।
पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः॥"

इति वृद्धवसिष्ठोक्तेः। व्रतार्के तु युक्तं तु दिनद्वये उदयसंबन्धाभावेसंवत्सरारम्भप्रयुक्तकार्यलोपप्रसक्ताविदं वचनं पूर्वयुताग्राह्यताविधायकं दिनद्वयेतत्संबन्धे तु सम्पूर्णत्वादेव पूर्वप्राप्ते कदाकार्यमित्याकांक्षाविरहात्पूर्वयुतत्वविरहाच्च नैतद्वचनात्पूर्वेति।

"ब्राह्मे प्रवर्तयामास कालस्य गणनामपि।" इति।

अत्रायमाशयः। क्षय एवास्य वसिष्ठवचनस्य प्रवृत्तिरिति अत्र। तैलाभ्यङ्गः। शकादिश्रवणम्। अत्रैव युगादित्वात्र पूर्वाह्णव्यापिनी। अत्रैव नवरात्रारम्भस्तत्र परयुता ग्राह्या।

स०७–अत्र दमनकादिभिर्भास्करपूजा तत्रपूर्वाह्णमध्याह्नौ मुख्यगौणौ। उभयदिने तत्त्वे पूर्वा। जस्मन्तभास्करे 'युग्मात्पूर्वविद्धे'ति ब्रह्मभविष्ययोः। 'सप्तमी चाष्टमी-युक्ता' इति ब्रह्मवैवर्तेपि च। माधवीये तु सर्वदेवपूजाव्रतेषु पूर्वैव 'षण्मुन्योरि'ति युग्मशास्त्रात्।

अ०८–इयमशोकाष्टमी । अत्राऽशोककलिकाप्राशन-भवान्युत्पत्तिब्रह्मपुत्रनदस्नानानि । तत्राशोककलिकाप्राशने पञ्चमार्द्धप्रहरव्यापिनी भ्रातृद्वितीयावत्। भवान्युत्पत्तौ पूर्वाह्णव्यापिनी । उभयदिनेसत्त्वेऽसत्त्वे वा युग्मशास्त्रात्परा । उपवासेपि परेति रामप्रकाशनिर्णयसिन्धु जस्मन्तभास्कर भगवन्तभास्कराः। क्षये पूर्वेति माधवः । ब्रह्मपुत्रनदस्नाने प्रातःकालव्यापिनी । 'प्रातस्तु विधिवत्स्नात्वे, ति निर्णयसिन्धुजस्मन्तभास्करधृत विष्णुवचनादत्र बुधवारपुनर्वसुनक्षत्रयोगेऽतिप्राशस्त्यम् । नक्षत्रयोगस्तु तत्काल एव ग्राह्यः ।

न०९–राम, नवमीयं मध्याह्नव्यापिनी ग्राह्या।

"चैत्रशुक्ला तु नवमी पुनर्वसुयता यदि ।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥
चैत्रमासे नवम्यां तु जातो रामः स्वयं हरिः ।
पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ॥

अत्र सौभाग्यशयनव्रतमपि । तत्रापि परैव । अत्र मत्स्यजयन्त्यपराह्णव्यापिनी निर्णयसिन्धुजस्मन्तभास्करयोः । अत्र व्रतार्ककृता पूर्वाह्णव्यापिनीयमित्युक्तं, तन्मन्वादिविषयम् । इयं मन्वादिरपि । तत्र पूर्वाह्णव्यापिनी ग्राह्या । शुक्लपक्षस्थत्वात् । श्राद्धादौ वेदमुपवासेपीति माधवनिर्णयसिन्धुजस्मन्तभास्करानन्तभट्टाः । अत्रारुन्धतीव्रतमपि । तत्र पूजनदानब्राह्मणभोजनादिकं दिवास्वभोजनं, रात्रौ नक्तव्रतत्वादिति व्रतार्के ।

च०४–चतुर्थीयं स्नानादावुदयव्यापिनी । वृद्धा परा भौमशनिवारभरणीयुतातिपुण्येति कालनिर्णयदीपिका। अत्र मोदकादिभिर्गणेशपूजोक्ता मध्याह्ने निर्णयामृते।

प०५–इयं श्रीपञ्चमी सामान्यनिर्णयात्पूर्वाह्णव्यापिनी।उभयदिने तत्त्वे पूर्वा युगभूतानामिति युग्मशास्त्रादिति माधवनिर्णयसिन्धुदीपिकाजस्मन्तभास्कराः । इयं कल्पादिरपि । तत्रापि पूर्वाह्णव्यापिन्येतन्निर्णयसिन्धौ जस्मन्तभास्करस्य । पुराणान्तरेऽत्रापि मत्स्योत्पत्तिरुक्ता ।

षष्ठी६–अत्र स्कन्दपूजोक्ता दीपिकायाम् । एतत्कालस्त्वाषाढशुद्धषष्ठ्यामुक्तः ।

द०१०-अत्र यमपूजोक्ता निर्णयामृते। तत्रापराह्णव्यापिनीयं दशमी रामप्रकाशेपि ।

ए०११-अत्र लक्ष्मीसहितविष्णोरान्दोलनमुदयव्यापिन्यामुक्तम् । निर्णयसिन्धुजस्मन्तभास्करयोस्त्वेवापराह्णे वास्तुपूजोक्ता ।

द्वा०१२-अत्र दमनकार्पणमुक्तमगस्तिसंहितायाम्—

"द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः ।
बौधायनादिभिः प्रोक्तः कर्तव्यः प्रतिवत्सरम्॥"इति।

निर्णयसिन्धुभगवन्तभास्करजस्मन्तभास्करेषु पारणाहे द्वादश्यभावे विशेष उक्तः ।

"पारणाहे न लभ्येत द्वादशी घटिकापि वा।
तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे ॥"

तथा, माधवे दमनारोपः स्यान्मधौ विघ्नतो यदि ।
वैशाख्यां श्रावणे नागे कर्तव्यं दमनार्पणम्" ॥

माधवे वैशाखे द्वादश्यां नागे पञ्चम्याम् । रात्रिव्यापिनीयम् । निर्णयसिन्धौ तु । एकादश्यां दमनाहरणं द्वादश्यां तद्विष्णुशिवपूजोक्ता । इदं दमनकार्पणं शुक्रास्तादावपि कार्यं मलमासे च । अत्र द्वादशीव्रतं स्वीकृत्य पारणाहो ग्राह्यम् । तत्र पारणाह इति युक्तमिति कमलाकरः । केश्चिदियं वामनद्वादश्युक्ता ।

श्रीरामनवमी प्रोक्ता कोटिसूर्य ग्रहाधिका ।
केवलापि सदोपोष्या नवमीशब्दसंग्रहात् ॥
पूर्वदिन एव मध्याह्नव्यापिनी, न परदिने, तदा पूर्वैव उभयदिने मध्याह्नव्याप्तावव्याप्तौ परा, 'सर्क्षापि पूर्वा नोपोष्येति माधवः ।
"नवमी चाष्टमीविद्धा त्याज्या व्रतपरायणैः ।
वैष्णवानां विशेषात्तु तत्र विष्णुपरैरपि ॥
दशम्यादिषु वृद्धिश्चेद्विद्धा त्याज्यैव वैष्णवैः ।
तदन्येषां च सर्वेषां व्रतं तत्रैव निश्चितम् ॥" इति ।
दशम्यादिपूर्णिमान्तासु तिथिषु वृद्धिश्चेदिति, तदन्येषामिति च यदन्यदा प्रातस्त्रिमुहूर्ता नवमी दशमी च क्षयवशात्सूर्योदयात्प्रागेव समाप्यते तदा स्मार्तानां तत्रैवैकादशीनिमित्तोपवासान्नवमी व्रताङ्गपारणालोपः स्यादतोऽष्टमी विद्धैव स्मार्तैः कार्या, वैष्णवैस्तु द्वितीयैव कार्येति सूचयति। दशमीवृद्ध्यभावे अष्टमीविद्धाया इयमध्याह्नव्यापित्वे क्षये च वैष्णवैरपि विद्धैवोपोष्येतीत्थं सिद्धमिति माधवजस्मन्तभास्करनिर्णयसिन्धुमतम् । इयं मलमासे सति शुद्धे कार्या । इमां नवमीमारभ्य सर्वनवमीषु भद्रकाल्यादिव्रतमुक्तं रामप्रकाशे ।

द० १०-अत्र यमपूजोक्ता निर्णयामृते। तत्रापराह्णव्यापिनीयं दशमी रामप्रकाशेऽपि।

ए० ११-अत्र लक्ष्मीसहितविष्णोरान्दोलनमुदयव्यापिन्यामुक्तम्। निर्णयसिन्धुजस्मन्तभास्करयोस्त्वत्रैवापराह्णे वास्तुपूजोक्ता।

द्वा० १२-अत्र दमनकार्पणमुक्तमगस्तिसंहितायाम्—
"द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः।
बौधायनादिभिः प्रोक्तः कर्तव्यः प्रतिवत्सरम्॥" इति।
निर्णयसिन्धुभगवन्तभास्करजस्मन्तभास्करेषु पारणाहे द्वादश्यभावे विशेष उक्तः।
"पारणाहे न लभ्येत द्वादशी घटिकापि वा।
तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे॥"
तथा, माधवे दमनारोपः स्यान्मधौ विघ्नतो यदि।
वैशाख्यां श्रावणे नागे कर्तव्यं दमनार्पणम्"॥
माधवे वैशाखे द्वादश्यां नागे पञ्चम्याम्। रात्रिव्यापिनीयम्। निर्णयसिन्धौ तु। एकादश्यां दमनाहरणं द्वादश्यां तद्विष्णुरित्वपूजोक्ता। इदं दमनकार्पणं शुक्रास्तादावपि कार्यं मलमासे च। अत्र द्वादशीव्रतं स्वीकृत्य पारणाहो ग्राह्यम्। तत्र पारणाह इति युक्तमिति कमलाकरः। केचिदियं वामनद्वादश्युक्ता।

प्र० १३-अनङ्गत्रयोदशीयं पूर्वविद्धोपोष्या। तथाच संवर्तः-

"कृष्णाष्टमी बृहत्तल्पा सावित्री वटपैतृकी।
कामत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः॥" इति।

दीपिकानिर्णयसिन्धुजस्मन्तभास्करा अप्येवम्। अत्र कालस्तु मार्गशुक्लानङ्गत्रयोदश्यामुक्तो ध्येयः। अत्र माधवेनेयमपराह्णगा परा चोक्ता। मध्याह्ने कामदेवपूजोक्ता। किञ्चात्र भौमवारसत्त्वे शिवसमीपे गङ्गास्नानतो महत्फलमिति जस्मन्तभास्करे देवीपुराणात्। तत्रौदयकी ग्राह्या बृहत्तल्पेत्यत्र बृहत्तपेति मुख्यः पाठ उक्तो हेमाद्रौ रामप्रकाशे च।

प्र० १४-इयं पूर्वविद्धा रात्रिव्यापिनी ग्राह्या कामोत्सवे-

"मधोः श्रावणमासस्य शुभा या च चतुर्दशी।
सा रात्रिव्यापिनी ग्राह्या नान्या शुक्ला कदाचन॥"

इति निर्णयसिन्धु जस्मन्तभास्करस्थहेमाद्रीयबौधायनोक्तेः। 'परापूर्वाह्णगामिनीति' वा पाठः।

"कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।"

इति पूर्वदिने सायं मुहूर्तत्रयवेधे पूर्वाऽन्यथोत्तरेति हेमाद्रिमाधवदीपिका निर्णयसिन्धुजस्मन्तभास्कराः। इयं शिवचतुर्दश्युक्ता निर्णयामृते। रात्रिव्यापिनी।

पू०१५-इयं सामान्यनिर्णयात्परैवेति निर्णयसिन्धुनिर्णयामृतयोः। उपवासे तु युग्मात्पूर्वेति रामप्रकाशः। इयं मन्वादिस्तत्र पूर्वाह्णव्यापिनी। अत्र रविगुरुशनिवारसत्त्वे स्नानवस्त्रयुगदानश्राद्धकरणादश्वमेधजं पुण्यमुक्तं निर्णयसिन्धुजस्मन्तभास्करयोः। अत्र कैश्चिद्दमनकैःशिवपूजोक्ता तत्र कालः प्रातरेव। निर्णयामृतेत्र चित्रायुतायां विचित्रवस्त्रदानस्नानतर्पणाद्युक्तं दमनकैः विशेषाच्छिवपूजा सर्वदेवपूजा चोक्ता। अत्र हेमाद्रिस्कान्दे सर्वमासीयपूर्णिमासु तत्तन्मासनक्षत्रचन्द्रगुरुयोगे गुरुवारयोगे स्नानादावनन्तफलमुक्तम्।

## वैशाखकृष्णपक्षीयप्रतिपदादितिथिनिर्णयः।

प्र०१–अत्राऽश्वत्थसेचनधर्मघटाद्दिदानं कार्यमुदयव्यापिन्याम्। वृद्धौ क्षये च पूर्वा प्रतिपत्।

द्वितीया२–..............................

तृतीया३–..............................

चतुर्थी४–..............................

---

टिप्पणी–पौर्णमासान्तमासाभिप्रायेणेदमुक्तम्। अमावास्यान्तमासे "चैत्रकृष्णप्रतिपदादितिथिनिर्णयः" इति बोध्यम्। एवं सर्वत्रापि कृष्णपक्षेषु पूर्वपूर्वमासकृष्णपक्षत्वं बोध्यम्।

पंचमी५–अत्र पुत्रार्थिना षट्पिण्डात्मकं श्राद्धं कार्यम्। तत्र कालः पार्वणीयः।

षष्ठी६–.................................................

सप्तमी७–.................................................

अ०८–इयं शीतलापूजने नवमीयुता पूर्वाह्णव्यापिनी जस्मन्तभास्करदुर्गावतीप्रकाशयोरुक्ता।कालाष्टमीव्रते सायंकालव्यापिनी। विशेषोऽत्र ज्येष्ठकृष्णाष्टम्यामुक्तः। अत्र चण्डिकाव्रतम्। तत्र पूर्वाह्ण उपक्रमकालो मध्याह्नो मुख्यः। "पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः।" इति माधवीये भविष्योक्तेः।

नवमी९–.................................................

दशमी १०–.................................................

एकादशी ११–.................................................

द्वादशी १२–.................................................

त्र०१३–अत्राप्यनङ्गत्रयोदश्युक्तारामप्रकाशस्थविष्णुधर्मोत्तरे। तत्कालस्तु मार्गशीर्षेऽनङ्गत्रयोदश्यां वक्ष्यते।

च०१४–अत्र कुण्डोदकपानं भगवन्तभास्करउक्तम्। तत्र पूर्वैतिच।

अ०३०–अत्र सकृद्दानम्। तत्र त्रिमुहूर्तोदयिकी ग्राह्या। श्राद्धे तु कुतपकालिकी अपराह्णव्यापिनी वेति माधवदी-

पिकाकारौ।अत्र सोमभौमगुरुवारान्यतमसत्त्वे पुष्करं नाम पर्व भवति । तत्र स्नानदानादेः सूर्यपर्वशताधिकं फलमुक्तं कालनिर्णयदीपिकास्थमहाभारते । "अमा सोमे तथा भौमे गुरुवारे यदा भवेत् । तत्पर्व पुष्करं नाम सूर्यपर्वशताधिकम्॥" इति।इदं पर्व सति सम्भवे सर्वमासीयामासु ज्ञेयम् ।

## वैशाखशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः ।

प्रतिपदा१–..................................

द्वि०२–अत्र वृद्धपुरुषदर्शनपूजनमुदयव्यापिन्याम्। वृद्धपुरुषो ब्रह्मा । प्राकृतभाषायां 'बूढेबाबू' इति प्रसिद्ध इति कश्चित् ।

तृ०३–इयमक्षय्यतृतीया पूर्वाह्णव्यापिनी । दिनद्वये तद्व्याप्तौ परा । "वैशाखे शुक्लपक्षे तु तृतीया रोहिणीयुता । दुर्लभा बुधवारेण सोमेनापि युता तथा ॥ रोहिणी बुधयुक्तापि पूर्वविद्धा विवर्जिता । भक्त्या कृतापि मान्धातः पुण्यं हन्ति पुराकृतम् ॥ गौरी विनायकोपेता रोहिणीबुधसंयुता । विनापि रोहिणीयोगात्पुण्यकोटिप्रदा सदा॥" इति । पूर्वविद्धा द्वितीयाविद्धा।गौरी तृतीया । विनायकश्चतुर्थी तद्युता इति । नारदीये वसिष्ठवाक्यादिति माधवकमलाकर·

जस्मन्तभास्करनिर्णयामृतादयः । रामप्रकाशे कृत्तिकोपेतेत्यपि लिखितम्।अत्र गौरीपूजनं जलपूर्णकलशदानं सक्तुदानं सूर्यपूजनादिकञ्च । इयं युगादिरपि। कृतयुगस्य त्रेतायुगस्य चेति पुराणादस्या द्वैविध्यं कल्पभेदाद्व्यवस्थाप्यम्।तत्रापि पूर्वाह्णव्यापिनी श्राद्धेपि पूर्वाह्णव्यापिनी ग्राह्या "पूर्वाह्णे तु सदा कार्याः शुक्ला मनुयुगादयः। दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिके" इति पाद्मात्। 'द्वे शुक्ले द्वे तथा कृष्णे'इति हेमाद्रौ नारदीयाच्चेति निर्णयसिन्धुकालनिर्णयदीपिकाजस्मन्तभास्करमतम्। दिनद्वये तत्त्वे परेति हेमाद्र्यादयः।अत्रोदयव्यापिन्यां गङ्गास्नानात्सर्वपापहानिर्यवैर्विष्णुपूजनहोमाद्य। अत्र लवणोदधिस्नानमाढकमात्रलवणधेनुतच्चतुर्थांशलवणवत्सदानञ्चपूर्वाह्णे अस्यामेव परशुरामावतारस्तत्रप्रदोषव्यापिनीनिर्णयसिन्धुस्थभार्गवार्चनदीपिकायां स्कान्दे भविष्ये च "वैशाखस्य सिते पक्षे तृतीयायां पुनर्वसौ। निशायाः प्रथमे यामे रामाख्यः समये हरिः॥ स्वोच्चगैः षड्ग्रहैर्युक्ते मिथुने राहुसंस्थिते ।रेणुकायास्तु योगर्भादवतीर्णो हरिः स्वयम्॥" इति ।दिनद्वये तद्व्याप्तावंशतःसमव्याप्तौ च पराऽन्यथा पूर्वैव।तदुक्तं तत्रैव भविष्ये "शुक्ला तृतीया वैशाखे शुद्धोपोष्या दिनद्वये । निशायां पूर्वयामे

चेदुत्तरान्यत्र पूर्विका॥" इति। जस्मन्तभास्करेप्येवम्। अत्र त्रिलोचनयात्रोक्ता काशीखण्डे। तत्रापि पूर्वाह्णव्यापिन्येव।




चतुर्थी४—..............................

पञ्चमी५—..............................

षष्ठी६—..............................

स०७—अत्र गङ्गोत्पत्तिःपृथ्वीचन्द्रोदये ब्राह्मे "वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी पुरा। क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥ तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम्।" इति। अत्र निर्णयसिन्धौ शिष्टाचारान्मध्याह्नव्यापिनी ग्राह्येत्युक्तम्। जस्मन्तभास्करे पूर्वाह्णव्यापिनी दैविककर्मत्वात्। मध्याह्नव्यापिनी ग्राह्येति तु शिष्टाचारः पूर्वाह्णासम्भवे ज्ञेयः। दिनद्वये तद्व्याप्तावव्याप्तौ वा सामान्यनिर्णयात्पूर्वा। निर्णयसिंधौ तु दिनद्वये तद्व्याप्तावेकदेशव्याप्तौ वा पूर्वा, युग्मवाक्यात्। इयमेव निर्णयामृते निम्बसप्तमीत्युच्यते। सा च पूर्वविद्धेति माधवः। अत्र पद्मपुराणे शर्कराव्रतमुक्तम्।तत्र क्रमः प्रातः शुक्लतिलैः स्नानं कृत्वा स्थण्डिलेऽष्टदलकमलोपरि कलशं स्थाप्य तत्र शर्करादिभिः सूर्यपूजां कृत्वा रात्रौ पञ्चगव्यपानमष्टम्यां सूर्यप्रतिमादानं सशर्करमेतद्व्रतफलं पुत्रादिवृद्धिः।

अ०८–अत्रोपवसन् आम्रफलरसेन स्वयं स्नात्वाऽपराजित. देवीं मांसीवालकवारिभिः स्नापयित्वा संपूज्य शर्कराक्षीरनैवेद्यं दत्वा नवम्यां तदेव ब्राह्मणान्कुमारीश्च भोजयित्वा दक्षिणां दत्वा किञ्चिन्नैवेद्येन पारणां कुर्यात् । मांसी जटामांसी । वालकमुशीरम् । पूजनकालस्त्वपराह्णः ।

न०९–अत्र निर्णयामृते चण्डिकाव्रतमुक्तम् । तत्र कालस्तु मध्याह्न एव । उभयदिने तदसत्त्वे पूर्वाह्णव्यापिनी ग्राह्योभयत्र तत्सत्त्वे पूर्वा । रामप्रकाशे पक्षद्वयेऽप्युपवासश्चण्डिकापूजा चोक्ता । "पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः॥" इत्युक्तेः ।

दशमी १०–..............................................

एकादशी ११–..............................................

द्वा०१२-अत्र शीतलजलेन केशवस्नानमुक्तं पूर्वाह्णव्यापिन्यां नारदीये 'वैशाखे शुक्लपक्षेइत्या' दिना । अत्रैव रामप्रकाशे पिपीतकद्वादशीव्रतमुक्तम् । तत्र मध्याह्नव्यापिनी ग्राह्योभयदिने तत्त्वे पूर्वा युग्मवाक्यादिति। अत्र निर्णयसिन्धुजस्मन्तभास्करस्थज्योतिर्निवन्धेव्य तीपाताभिधो योगविशेष उक्तः । "पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे । सामाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः ॥

अस्मिंस्तु गोभूमिहिरण्यवस्त्रदानेन सर्वं परिहाय पापम्।
सुरत्वमिन्द्रत्वमनामयत्वं मर्त्याधिपत्वं लभतेमनुष्यः॥"
इति । पञ्चाननः सिंहः। करभो हस्तः। साम्नां द्वादशत्वेनलक्षणया द्वादशीति।अत्र योगवशेनप्राशस्त्यम्।
इयं परशुरामद्वादशी। अत्रैकादश्यामुपवासो द्वादश्यां दानमुक्तं निर्णयामृते।

त्र०१३-इयमनङ्गत्रयोदश्युक्ता रामप्रकाशे।

च०१४-इयं नृसिंहचतुर्दशी। अत्र प्रदोषे नृसिंहोत्पत्तेः प्रदोषव्यापिनी।"वैशाखे शुक्लपक्षेतु चतुर्दश्यां निशामुखे।"
इत्यादिनृसिंहपुराणात् । निशामुखं प्रदोषः ।
उभयत्र परेति भगवन्तभास्करे । दिनद्वये वैषम्येण तद्व्याप्तावधिका ग्राह्या । समव्याप्तौ परा । दिनद्वयेऽप्यव्याप्तौ पूर्वा, गौणकाले सत्त्वादिति जस्मन्तभास्करे। निर्णयसिन्धौ तत्त्वं तूक्तम्। पूर्ववचसामनाकरत्वेननिर्मूलत्वात्।हेमाद्रौ नृसिंहपुराणे"मज्जन्मसम्भवंपुण्यं व्रतं पापप्रणाशनम्"इत्युपक्रम्य"स्वातीनक्षत्रयोगे च शनिवारे तु मद्व्रतम्। सिद्धियोगस्य संयोगे वणिजे करणे तथा ॥ पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः।सर्वं रेतैस्तु संयुक्तं हत्याकोटिविनाशनम्॥
एतदन्यतरैर्योगे मद्दिनं पापनाशनम्। केवलेपि प्रकर्त्तव्यं मद्दिने व्रतमुत्तमम्॥ अन्यथा नरकं याति यावच्च-

र्द्रदिवाकरौ॥"इत्युक्त्वा"ततो मध्याह्नवेलायां नद्यादौ विमले जले" इत्यादिना मध्याह्न एव व्रतविधानाच्चतुर्दश्युत्तरार्द्धे वणिजे करणे मध्याह्ने स्पष्टं जन्म प्रतीयते। सन्ध्यायां तु जन्म क्वाप्यनुक्तेर्मौख्यैनोक्तं तद्वशान्निर्णयश्च हेय एवेति। अत्र ममेयं मीमांसा-नृसिंहाविर्भावकालं मध्याह्नमज्ञात्वा हिरण्यकशिपुवधसमये प्रदोषे तद्दर्शनात्प्रदोषकाले तज्जन्मोक्तम्।इयं योगवशादतिप्रशस्ता। योगाः स्वात्यादय उक्ता एवेति।

पू०१५-अत्र पक्वान्नोदककुम्भतिलदानादि। तत्र पूर्वाह्णव्यापिनी ग्राह्या। अत्र कूर्मजयन्ती। सा चापराह्णव्यापिनी निर्णयसिंधौ।रामप्रकाशे सायंकालव्यापिनी। निर्णयामृतेऽत्र कृष्णमृगाजिनदानं पृथ्वीदानसमफलमुक्तं विशाखायुतायां विशेषात्।

## ज्येष्ठकृष्णपक्षीयप्रतिपदादितिथिनिर्णयः।

प्रतिपदा१—........................................

द्वितीया२—........................................

तृतीया३—........................................

चतुर्थी४—........................................

पञ्चमी५—........................................

षष्ठी६—.....................................................

सप्तमी७—...................................................

अ०८—इयं चैत्रकृष्णशीतलाष्टमीवत्पूर्वाह्णव्यापिनी ग्राह्या। कालाष्टमीव्रते तु सायंकालव्यापिनी। तत्रास्तमयादर्वाक्त्रिमुहूर्तात्मकः सायंकालः। उभयदिने तत्सत्त्वे पूर्वविद्धा।

नवमी९—... ... ... ... ... ... ... ...

दशमी१०—...... ... ... ... ... ... ...

एकादशी११— ... ... ... ... ... ... ...

द्वा०१२—अत्र वटसावित्रीव्रतारम्भो गौडमतेन। तत्रात्र त्रिरात्रव्रतपक्षे नक्तं त्रयोदश्यामयाचितं चतुर्दश्याममायामुपवासेन व्रतसमाप्तिः। सावित्रीप्रतिमापूजने पूर्वा पराशरमतेन। मतान्तरेण त्वमायाम्।

त्रयोदशी१३—... ... ... ... ... ... ......

चतुर्दशी१४—... ... ... ... ... ... ......

अ०३०—अत्र वटसावित्रीव्रतम्।तत्रामा चतुर्दशीविद्धा ग्राह्या। यदा त्वष्टादशघटिका चतुर्दशी तदा परा ग्राह्या।

"पूर्वविद्धैव सावित्रीव्रते पञ्चदशी तिथिः।
नाड्योऽष्टादश भूतस्य स्युश्चेत्तत्र परेऽहनि॥"

इति। माधवव्रताकौं पूर्वदिने चतुर्दश्यष्टादशघटिका। उत्तरदिने चामा वृद्धिवशाच्चतुर्दशीतोधिका तदा परे-ऽप्येतत्परौ। वस्तुतस्तु यदा चाष्टादशघटिका चतुर्दशी तदाप्यमा सावित्रीव्रते पूर्वा ।

"भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ।"

इति स्कान्दस्य सावित्रीव्रतातिरिक्तविषयत्वात् । तथाच ब्रह्मवैवर्ते ।

"भूतविद्धा न कर्तव्या अमावस्या च पूर्णिमा ।
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ॥"

इति जस्मन्तभास्करे । निर्णयामृतरामप्रकाश-निर्णयासिन्धुभगवन्तभास्करेष्वप्येवम्—

"बृहन्नल्पा तथा रम्भा सावित्री वटपैतृकी ।
कृष्णाष्टमी च भूता चकर्तव्या सम्मुखीतिथिः॥ "इति।

रम्भा तृतीया। निर्णये माधवीयस्कान्दवचनात् । रजनीमुख इति निर्णयसिन्धुवचनाच्च । सूर्यास्ता-दर्वाङ् मुहूर्तत्रयात्मा सायंकालोऽस्य मुख्यः कालः । दिनद्वयेपि सायं काले तद्व्याप्तौ पूर्वा। चतुर्दशीवेधस्य प्राशस्त्यात् । दाक्षिणात्यास्त्वेतद्व्रतं ज्येष्ठपूर्णिमायां कुर्वन्ति। परे भाद्रपूर्णिमायाम्। तत्रापि कालनिर्णयो-ऽप्यमेव ।

## ज्येष्ठशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः ।

प्र० १—अतः प्रभृति दशम्यन्तासु तिथिषु दशाश्वमेधिके स्नानमुक्तं काशीखण्डे "ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम् । दशाश्वमेधिके स्नात्वा मुच्यते सर्वपातकैः ॥ एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः । आशुक्लपक्षदशमीं प्रतिजन्माघमुत्सृजेत् ॥" इति । स्नानकाल उदयव्यापी। क्षये पूर्वाह्णोपि ।

द्वितीया२—... ... ... ... ... ... ... ...

तृ० ३—इयं रम्भाख्यव्रते पूर्वयुता ग्राह्या। तथोक्तं माधवीये। "बृहत्तपा तथारम्भासावित्री वटपैत्रिकी। कृष्णाष्टमी च भूता च कर्तव्या सम्मुखी तिथिः॥" सम्मुखी सायंकालव्यापिनी।साम्मुख्यं च सूर्यास्तादर्वाङ्मुहूर्तत्रयात्मकत्वम्। तत्र तृतीयासत्त्वे तस्यामेव पूर्वविद्धायामनुष्ठानं,तद्विधायकवाक्ये सम्मुखीत्यभिधानात्।तच्छून्यत्वे परविद्धायामप्यनुष्ठानमिति माधवकमलाकरदीपिकाकारमतम् । तत्त्वेपि लवणतृतीया परेति माधवः ।

च० ४—चतुर्थीयमुमापूजने मध्याह्नव्यापिनी । उभयदिने तत्त्वे मातृविद्धेति माधवनिर्णयामृतजस्मन्तभास्करमतम् । तन्मते तु परविद्धा 'युगभूतानाम्' इत्यादियुग्मवाक्यादिति कालनिर्णयदीपिका ।

पञ्चमी५–... ... ... ... ... ... ... ...

षष्ठी६–... ... ... ... ... ... ... ...

स०७–सर्वमासीयशुक्लसप्तमी रविवारयुता कल्याणविजयभानुधान्यपूर्वाः सप्तम्यो भवन्ति । तत्र पूर्वयोरुपवासोऽन्त्ययोर्नक्तं भोजनम् । हस्तनक्षत्राद्यपादयुता सा च भद्राख्या तत्रोपवासः । संक्रान्तियुता महाजया । रेवतीरविवारयुता महापुण्योक्ता रामप्रकाशे ।

अष्टमी८–अत्र शुक्लादेवीपूजा निर्णयामृते रामप्रकाशे चोदयव्यापिन्याम् ।

नवमी९–अत्र निर्णयामृते ब्रह्माणीपूजोक्ता नक्तम् । रामप्रकाशेऽप्येवम् ।

द०१०-इयं दशहरोक्ता निर्णयसिन्धुस्थहेमाद्रौ ब्राह्मे "ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता । हरते दश पापानि तस्माद्दशहरा स्मृता ॥ "इति। वाराहेपि "दशमी शुक्लपक्षे तु ज्येष्ठे मासि कुजेहनि । अवतीर्णा यतः स्वर्गाद्धस्तर्क्षे तु सरिद्वरा ॥ हरते दश पापानि" इत्यादि। अत्र रामप्रकाशस्थ गौडग्रन्थधृतशङ्खवचनेनान्योपि विशेष उक्तः । तथा च "ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां हस्ते शैलान्निरगमदियंजाह्नवी मर्त्यलोकम् । पापान्यस्यां हरति च तिथौ सा दशेत्याहु-

रायाः पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य॥" इति। कूर्मपुराणे "ज्येष्ठस्य शुक्लदशमी भवेद्भौमदिने यदि। प्रोक्ता हस्तादिसंयुक्ता तिथिर्दशहरा स्मृता॥" इति। स्कान्दे दश योगा उक्ताः। तथा च "ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः। व्यतीपाते गरानन्दे कन्याचन्द्रे वृषे रवौ। दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते॥" इति। अत्र बुधभौमयोः कल्पभेदेन व्यवस्था। अत्र ब्राह्मशङ्खवाराहवचनोक्तपञ्चयोगेषु गङ्गावतीर्णा। तत्र स्नानाद्दशजन्मार्जितदशविधपापहानिः फलम्। स्कान्दोक्तदशयोगेषु रामेण सेतुबन्धे शिवः स्थापित-स्तेष्वपि स्नानाद्दशविधपापहानिः फलम्। वस्तुतः पञ्चसु योगेषु स्नानमुक्तफलदं दशयोगेषु रामेश्वरदर्शनं [illegible]पापहरम्। शिवत्वप्राप्तिश्च स्कान्दे सेतुमाहात्म्ये "दशयोगे सेतुमध्ये लिङ्गरूपधरं हरम्। रामो वै स्थापयामास शिवलिङ्गमनुत्तमम्॥ तद्दर्शनाच्छिवत्वं स्यात्" इत्यादि। तत्र स्नानायवान्तरफलम्। अत्र भौमबु-धयोर्विरोधपरिहाराय कल्पभेद उक्तः स चायुक्तः। भौमे गङ्गावतारात् बुधे शिवस्थापनात्। इयं च यत्रैव योगबा-हुल्यं सैव ग्राह्या। योगाधिक्ये फलाधिक्यात्। उभय-दिने तल्लाभे परदिन एवोदयकाले दशमीलाभादिति रामप्रकाशः। पापं च कायिकवाचिकमानसम्। इयं

ज्येष्ठे मले तत्रैवकार्या, न तु शुद्धे।"दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु॥"इतिनिर्णयसिन्धुजस्मन्तभास्करकालनिर्णयदीपिकारामप्रकाशस्थहेमाद्रौ ऋष्यशृङ्गोक्तेः। अत्र रात्रिजागरशिवगोविंदादिपूजनगङ्गाप्रतिमापूजनतद्दान तिलदानपितृतर्पणाद्यपि कार्यम्।

ए० ११-एकादशीयं निर्जलाख्या।अत्र निर्जल उपोष्य सशर्करजलकुम्भानेकादशयथाशक्ति वा विप्रेभ्यो दद्यात् इति निर्णयसिन्धौ।निर्णयामृतजस्मन्तभास्करयोरप्येवम्।जस्मन्तभास्करस्थगारुडे शालग्रामपूजनोत्सवाद्यधिकमुक्तम्।

द्वा० १२-अत्रभविष्ये वटसावित्रीव्रतारम्भ उक्तः"ज्येष्ठे मासि सिते पक्षे द्वादश्यां रजनीमुखे। व्रतं त्रिरात्रमुद्दिश्य दिवारात्रिस्थिरा भवेत्॥"इति। अत्रास्तादर्वाक्त्रिमुहूर्ता चेत्पूर्वातन्यूना परा। अत्राशक्तौ त्रयोदश्यां नक्तं चतुर्दश्यामयाचितममायामुपोषणम्। इयं रामद्वादश्युक्तानिर्णयामृते। एकादश्यां व्रतं द्वादश्यां प्रतिमादानमुक्तम्। रामप्रकाशेऽप्येवम्।

त्रयोदशी १३–... ... ... ... ... ... ...

च० १४-अत्र निर्णयामृते शिवप्रीतये सायंकाले धेनुदानमुक्तम्।

पू० १५-अत्र सावित्रीव्रतं तन्निर्णयो ज्येष्ठामायां द्रष्टव्यः। इयमुपवासे पूर्वा।स्नानादौ च परा।"सर्वैधृतिर्व्यतीपातो युगमन्वाद्यस्तथा। सम्मुखा उपवासे स्युर्दानादावन्तिमाःस्मृताः॥" इति स्मृतेरिति रामप्रकाशः। इयं मन्वादिः पौर्वाह्णिकी ग्राह्या। इयमेव योगवशान्महाज्येष्ठी। तदुक्तं जस्मन्तभास्करे गार्ग्ये "वृषे वा मिथुने भानौ जीवचन्द्रौ तथेन्द्रभे। पौर्णमास्यां गुरोर्वा रे महाज्येष्ठी प्रकीर्तिता॥" इति। तत्र स्नानादेर्महत्फलम्।ऐन्द्रं ज्येष्ठाभम्। क्वचित्"ऐन्द्रे गुरुशनी चैव प्राजापत्ये रविस्तथा॥"इति। तत्र प्राजापत्यं रोहिणीभम्। अत्र कैश्चिन्मृगशिरोऽपि गृहीतम्। निर्णयसिन्धुस्थहेमाद्रौ ज्योतिषे तु "ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा।"इतिगौडग्रन्थे तिथितत्त्वेऽनुराधापि गृहीता। निर्णयामृतेऽत्र तिलच्छत्रोपानदादिदानेन नृपत्वप्राप्तिरुक्ता।

## आषाढकृष्णपक्षीयप्रतिपदादितिथिनिर्णयः।

प्रतिपदा१—... ... ... ... ...

द्वितीया२—... ... ... ... ...

तृतीया३- ... ... ... ... ...
चतुर्थी४- ... ... ... ... ...
पञ्च०५-अत्र पूर्वाह्णे देवीपूजोक्ता कालनिर्णयदीपिकायाम् ।
षष्ठी६-... ... ... ... ...
सप्तमी७-... ... ... ... ...
अष्टमी८-शीतलाष्टमीवदेतन्निर्णयः ।
नव०९-अत्रेन्द्राणीपूजा व्रतञ्च । तत्र रात्रिव्यापिनी ग्राह्येति जस्मन्तभास्करे भविष्योत्तरे-

"आषाढे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् ।
पूजयेच्छ्रद्धया देवीमिन्द्राणीनाम नामतः ॥"

इत्यादि।कालनिर्णये नक्तवत्।निर्णयामृतेऽप्येवम्। रामप्रकाशे पक्षद्वयेऽप्रिहितमिदम् ।

दशमी१०-... ... ... ... ...
एकादशी११-... ... ... ... ...
द्वादशी१२-... ... ... ... ...
त्रयोदशी१३-... ... ... ... ...
चतुर्दशी१४-... ... ... ... ...
अ०३०-इयं हलहारिणी परविद्धा ग्राह्येति माधवः वेधोऽत्र सायंकालीयः।

## आषाढशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः ।

प्रतिपदा१—... ... ... ... ...

द्वि०२—द्वितीयेयं 'युग्माग्नी' ति युग्मशास्त्रात्,
"एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
त्रयोदशी अमावस्या ता उपोष्याः परान्विताः ॥"
इति वचनाच्च परा । अत्र रथयात्रोत्सवः निर्णय-
सिन्धौ स्कान्दे—
"आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।
तस्यां रथे समारोप्य रामं मां भद्रया सह ॥
यात्रोत्सवं प्रवर्त्याथ प्रीणयेत द्विजान्बहून् ॥"
तथा 'ऋक्षाभावे तिथौ कार्यम्' इति । जस्मन्तभा-
स्कररामप्रकाशयोरप्येवम् । भद्रा सुभद्रा ।
दीपिकामाधवीययोःपौर्वाह्णिकी उभयत्र तत्त्वे परेति।
अत्रोदयव्यापिन्यां दूर्वादर्शनमपि ।

तृतीया३—... ... ... ... ...

चतुर्थी४—... ... ... ... ...

पञ्चमी५—... ... ... ... ...

षष्ठी६—स्कन्दषष्ठीयं स्कन्दपूजायां मध्याह्नव्यापिनी । व्रते
तु सायंकालव्यापिनी । उभयदिने तत्सत्त्वे पञ्चमी-
युता ग्राह्या ।

## श्रावणकृष्णपक्षीयप्रतिपदादितिथिनिर्णयः।

प्रतिपदा १—... ... ... ... ...

द्वि० २--इयं बृहत्तल्पोच्यते । सा च पूर्वाह्णव्यापिनी ग्राह्या। उभयदिने तथात्वे पूर्वविद्धा । 'कृष्णाष्टमी बृहत्तल्पा सावित्री' इत्यादिसंवर्तवचनात् । माधवीये सायंकालव्यापिनी—

"बृहत्तल्पा तथा रम्भा सावित्री वटपैत्रिकी ।
कृष्णाऽष्टमी च भूता च कर्त्तव्या सम्मुखी तिथिः॥"

इति स्कान्दात्। जस्मन्तभास्करे तु—बृहत्तल्पैवाऽशून्यशयना सा चन्द्रोदयव्यापिनी । दिनद्वये तद्व्याप्तित्वे परा ।

"चतुर्ष्वसितपक्षेषु मासेषु श्रावणादिषु ।
अशून्याख्यं व्रतं कुर्याज्जयायोगे फलाधिकम्॥"

इतिस्मरणात्।निर्णयसिन्धुनिर्णयामृतयोरप्येवम्। परमत्र सम्मुख्येव मुख्या । उभयदिने तथात्वे पूर्वेति माधवमतंसाधु'उपोष्याः पूर्वसंयुताः' इत्यादिसंवर्तोक्तेः । इयमेव फलद्वितीया। तत्र चन्द्रोदयव्यापिनी।

तृतीया ३—... ... ... ... ...

चतु० ४-संकटचतुर्थीयं चन्द्रोदयव्यापिनी ग्राह्या ।

"श्रावणे बहुले पक्षे चतुर्थ्यां च विधूदये ।
तस्मिन्दिने व्रतं कार्यं संकटाख्यं सुरेश्वरि॥"

इति स्कान्दात् । 'प्रतिमासं तु यः कुर्यात्' इति

नारदीयवचनात्सर्वमासेषु चन्द्रोदयव्यापिन्येव। दिनद्वये चन्द्रोदयसत्त्वेऽसत्त्वे वा पूर्वैव। 'मातृविद्धो गणेश्वरः' इति वचनात् दिनद्वये तदभावे गणेशगौरीव्यतिरिक्तसरस्वतीव्रते परेति निर्णयसिन्धौ ब्रह्मवैवर्ते। तथा च "गणेशगौरीबहुलाव्यतिरिक्ताः प्रकीर्तिताः।
चतुर्थ्यः पञ्चमीविद्धा देवतान्तरयोगतः॥"
इति। मदनरत्नेऽप्येवम्। माधवीये तु—देवतान्तरयोगतः देवतान्तरे गौरीसरस्वत्यौ तयोर्योगतः उभयदिने मध्याह्नाभावे जयायुक्तायां व्रतं कार्यं विनायकस्य तूत्तरदिन इति। वस्तुतस्तु उभयदिने चन्द्रोदयाभावे पूर्वैव। पूर्वदिने चतुर्थ्यां चन्द्रदर्शनान्मातृयोगाच्च। सरस्वत्यादिव्रते तु परविद्धा। माधवेन तु मध्याह्नकाल उक्तः। स च सिद्धिविनायकव्रतविषयः।

पञ्च०५-इयं मातृपञ्चमी पूर्वविद्धा ग्राह्या। कृष्णपक्षस्थत्वाद्युग्मवाक्याच्च। अत्र मुख्यकालोऽष्टधाविभक्तदिनपञ्चमभाग उक्तो रामप्रकाशे।

षष्ठी६—... ... ... ... ......

सप्तमी७—... ... ... ... ...

अष्ट०८-इयं मन्वादिरपराह्णव्यापिनी। अत्र कालाष्टमीव्रतं पूर्वविद्धायाम्। सायंकालव्यापिन्यां ज्येष्ठकृष्णाष्टम्यामेतत्सम्यङ्निर्णीतं तत एव ज्ञेयम्।

न०९–अत्र निर्णयामृते कौमारीपूजा व्रतञ्चोक्तं नक्तम् ।
"श्रावणे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् ।
क्षीरषाष्टिकभक्तेन पूज्य रौप्यां कुमारिकाम् ॥"
इति । रामप्रकाशे नक्तं पक्षद्वयेऽभिहितम् ।

दशमी १०–... ... ... ...
एकादशी ११–... ... ... ...
द्वादशी १२–... ... ... ...
त्रयोदशी १३–... ... ... ...
चतुर्दशी १४–... ... ... ...
अ०३०–अत्र पिठोराव्रतं सायंकालव्यापि कार्यम् ।

## श्रावणशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः ।

प्र०१–अत्र विल्वरोटकव्रतं सोमवारयोगसम्भवे सार्द्ध-मासत्रयं कार्यम् । अत्र विल्वपत्रैःशिवपूजा रोटक-दानं तद्भक्षणञ्च । रोटका गुडशर्करान्यतरमिश्रि-तगोधूमजाः घृतपक्का अपूपापरपर्यायाः । कालोऽस्य प्रदोषो व्रतार्के शिवपुराणे उभयदिने सत्त्वेऽसत्त्वे वा, नक्तव्रतत्वात् । परा माधवीये ।

द्वि०२–अत्र खड्गदर्शनमुदयगायाम् ।

तृ०३–इयं स्वर्णगौरीति व्रतार्के । सूहीत्यर्गलापुरे । मधुश्र-वेति गुर्जरे प्रसिद्धा ।
"आद्या मधुश्रावणिका कज्जली हरितालिका ।

चतुर्थीमिश्रिता स्त्रीभिर्दिवानक्तो विधीयते॥"
इति दिवोदासीयवचनात्परेति निर्णयसिन्धुजस्मन्तभास्करयोः ।

च०४--चतुर्थीयं पूर्वयुता 'मातृविद्धो गणेश्वर' इति निर्णयसिन्धुजस्मन्तभास्करयोः ।

पं०५--नागपञ्चमीयं पूर्वाह्णव्यापिनी । उभयदिने तथात्वे परा ग्राह्या ।
"पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता ।"
इति । अत्र वासुकिसंज्ञके कुण्डे स्नातस्य विषस्पर्शो न भवेत् ।
"श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।
द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः ॥
पूजयेद्विधिवत्क्षीरदधिदूर्वाङ्कुरैः कुशैः ।
गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ॥
ये तस्यां पूजयन्तीह नागान्भक्तिपुरस्सराः ।
न तेषां सर्पतो वीर भयं भवति कुत्रचित्॥"
इति निर्णयसिन्धौ । जस्मन्तभास्करे तु नागपूजायामेव परा । उपवासे तु
"मध्यंदिनयुगायां तु भवेत्सार्पमुपोषणम् ।"
इत्युक्तेः मध्यंदिनस्थं युगं चतुर्थी यस्यामित्यर्थः ।
माधवीयदीपिकयोरप्येवम् । इयं वृद्धौ क्षयेऽपि पूर्वा ।

प०६—इयं कल्किजयन्ती सायंकालव्यापिनी । उभयदिने तत्सत्त्वे पूर्वेति निर्णयसिन्धौ ।

स०७—इयं शीतलाख्या मध्याह्नव्यापिनी व्रतार्के माधवीये च ।
"पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः।"
इति हारीतोक्तेः।उभयदिने तत्त्वेक्षये च पूर्वा माधवीयदीपिकयोः ।

अ०८—अत्र देवीव्रतं, नृसिंहव्रतञ्च । तत्र देवीव्रते सायंकालव्यापिनी । नृसिंहव्रते मध्याह्नव्यापिनी । उभयदिने तत्त्वे तूत्तरविद्धा माधवीये, दीपिकारामप्रकाशयोश्च ।

न०९—इयं सकुनवमी नक्तव्रतवन्निर्णया । रामप्रकाशेऽत्र कौमारीव्रतमुक्तम् । तत्रोभयपक्षयोरपि नवम्यां पूर्वदिने कौमारीनाम्नीं दुर्गां संपूज्य कुमारीं सुवासिनीर्विप्रांश्च यथाशक्ति भोजयित्वा विहितान्नेन नक्तं भुञ्जीत । तथा च भविष्योत्तरे
"श्रावणे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् ।
क्षीरषाष्टिकभक्तेन सर्वभूतहिते रतः ॥
उपवासपरो वीर नवम्योः पक्षयोर्द्वयोः ।
कौमारीमिति वै नाम्ना चण्डिकां पूजयेत्सदा ॥
कृत्वा रौप्यमयीं भक्त्या घोरां वै पापनाशिनीम् ।

करवीरजपुष्पैश्च गन्धैश्चागुरुचन्दनैः ॥
धूपेन च दशाङ्गेन मोदकैश्चापिपूजयेत् ।
कुमारीं भोजयेद्भक्त्या स्त्रियो विप्रांश्च भक्तितः ॥
भुञ्जीत वाग्यतः पश्चाद्बिल्वपत्रकृताशनः ।
एवं प्रपूजयेद्योयं श्रद्धया परयान्वितः ॥
स याति परमं स्थानं यत्र देवो गुरुः स्थितः ।"
इति । निर्णयामृतेऽप्येवम् । सकुनवम्यामियं प्रदो-
षव्यापिनी । नकुलनवम्यां मध्यान्हव्यापिनी ।
उभयदिने तत्सत्वेऽसत्त्वे वा पूर्वा युग्मशास्त्रादिति
माधवः ।

दशमी१०—... ... ... ... ...

एकादशी११—... ... ... ... ...

द्वा०१२—इयं दामोदरद्वादशयुक्ता निर्णयामृते । अत्रैकाद-
श्यामुपवासो द्वादश्यां विष्णुप्रतिमादानादि । अत्र
विष्णोः पवित्रारोपणं तत्र रात्रिव्यापिनी । पूजने
तु प्रातर्व्यापिनी।एकादश्यां तन्त्वधिवासनपक्षे द्वादश्यां
प्रातर्विष्णुपूजनादि द्वादश्यां रात्रौ तदधिवासने त्रयो-
दश्यां प्रातः पूजनादि दीपिकायाम्—
"गोदोहान्तरिते काले पूर्वेद्युरधिवासयेत् ।"
इति । गौणकालो रामार्चनचन्द्रिकायां—
" पवित्रारोपणं विघ्नाच्छ्रावणे न भवेद्यदि ।

कार्त्तिक्यवधि शुक्लार्के कर्त्तव्यमिति नारदः ॥"
शुक्लार्कः शुक्लद्वादशी। अकरणे नरकाप्तिरुक्ता पाद्मे–
"ऊर्जे व्रतं मधौ दोला श्रावणे तन्तुपूजनम् ।
चैत्रे च दमनारोपमकुर्वाणो व्रजत्यधः ॥"
इति। अत्र विष्णुपूजनपवित्रारोपणतत्स्वरूपद्रव्यब्राह्मणभोजनादि निबन्धेषु स्थितं तत्ततोऽवधार्यम्। शिवे तु तत्रैव कालोत्तरे–
"आषाढान्ते चतुर्दश्यां नभस्यनभसोस्तथा ।
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोः समम्॥"
इति। अन्यदेवतानां तु वक्ष्यते इति निर्णयसिन्धौ। उक्तकालेतरकालकरणेऽयुतमन्त्रजपःस्तोत्रपाठो वा ।

त्रयोदशी १३–... ... ... ...

च० १४–इयं पूर्वयुता रात्रिव्यापिनी । पूर्वदिने सायं मुहूर्तत्रयवेधे पूर्वाऽन्यथोत्तरेति निर्णयसिन्धुदीपिकाकालमाधवजस्मन्तभास्करेषु चैत्रशुक्लचतुर्दश्यामुक्तेयम्।

पू० १५–अत्रोपाकर्म । तत्र पूर्वाह्णव्यापिनी ग्राह्या । उभयदिने पूर्वाह्णे पूर्णिमासत्त्वेऽसत्त्वे वा तित्तिरिशाखिभिः परोदयिकी कार्यतरैर्याजुषैः पूर्वा । तत्र यघर्द्धरात्रादर्वाग्ग्रहणसंक्रान्तिस्तदा कातीयभिन्नैः पौष्ठपद्यां कर्मेदं कार्यम् । तत्तु श्रावणशुक्लपञ्चम्यां शाम्गायनैस्तु हस्ते आपस्तम्बैराथर्वणैश्च पौष्ठपद्यां

सामगैः श्रवणे कार्यम्। हस्तश्रवणयोरुभयदिने सत्त्वे चित्राधनिष्ठायुतयोः कार्यमिति निर्णयसिन्धु-जस्मन्तभास्करमतम्। अत्रैवापराह्णे रक्षाब-न्धनम्।

"ततोपराह्णसमये कुर्यात्पोटलिकां शुभाम्।
कारयेच्चाक्षतैस्तद्वत्सिद्धार्थैश्च समन्विताम्॥"

तच्च भद्रोत्तरं कार्यम्—

"भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा।"

इति संग्रहोक्तेरिति जस्मन्तभास्करे। निर्णय-सिन्धौ तु—

"ततोऽपराह्णसमये रक्षापोटलिकां शुभाम्।
कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैः॥"

इति। अत उपाकर्मानन्तर्यस्य पूर्णतिथावार्थिकस्यानुवादो न तु विधिः गौरवात्, प्रयोगभेदेन क्रमायोगाच्छूद्रादौतदयोगाच्च। तेन परेद्युरुपाकरणेऽपि पूर्वेद्युरपराह्णे तत्करणं सिद्धमिदं भद्रायां न कार्यं भद्रायामित्यादि-संग्रहोक्तेः। भद्रासत्त्वे तु रात्रावपि तदन्ते कुर्यादिति भगवन्तभास्करे। पूर्वदिने भद्रासत्त्वे परदिने उदय-व्यापिन्यां कार्यमिति देशाचारादिदमेव युक्तं प्रतीयते। इयं श्रवणाकर्मण्यस्तमययुग्याह्या। "अस्तंमिते स्थालीपाकं श्रपयित्वा" इति सूत्रात्। अत्र हयग्रीवो-त्पत्तिस्तत्र सायंकालव्यापिनी ग्राह्या।

## भाद्रकृष्णप्रतिपदादितिथिनिर्णयः ।

प्रति० १-... ... ... ... ...

द्वि० २—अत्राप्यशून्यशयनव्रतं तत्र चन्द्रोदयव्यापिनी ।
विशेषोऽत्र श्रावणकृष्णद्वितीयायां निर्णीतो द्रष्टव्यः ।

तृ० ३—अत्र विशालाक्षीयात्रोक्ता काशीखण्डे। तत्र रात्रिव्यापिनी ग्राह्या ।
"भाद्रकृष्णद्वितीयायामुपवासपरैर्नृभिः ।
कृत्वा जागरणं रात्रौ विशालाक्षीसमीपतः ॥" इति ।
इयं कज्जली परा ग्राह्येति दिवोदासीये निर्णयसिन्धुजस्मन्तभास्करयोरिति । अत्र बलदेवजन्मापि ।

च० ४—इयं बहुला सायाह्नव्यापिनी । दिनद्वये तत्त्वे पूर्वा ।
"गोर्याश्चतुर्थी वटधेनुपूजा" इत्याद्युक्तेः । अत्र धेनुपूजाशब्देन बहुलाख्या गृहीतेति जस्मन्तभास्करे मदनरत्नदिवोदासौ । निर्णयसिन्धावपराह्णः कालः शेषं समानम् । व्रतार्केऽत्र शकटव्रतं चन्द्रोदयव्याप्युक्तम् ॥

प० ५—... ... ... ... ...

ष० ६—अत्र हलषष्ठीव्रतं मध्याह्नव्यापि । अत्र द्वादशघटिका पञ्चमी चेत्पराऽन्यथा पूर्वेति माधवदीपिकाकारौ।जस्मन्तभास्करे तु—दिनद्वयेमध्याह्न सत्त्वेऽसत्त्वे वा परा । हलषष्ठीति कुशपलाशव्रतस्यैव संज्ञा ।

यत्तु सप्तमीयुतेति दिवोदास इति निर्णयसिन्धौ । तत्तु षण्मुहूर्त्तपञ्चमीवेधपरं दिनद्वये तत्सत्त्वेऽसत्त्वे परेत्येतत्परं वेति । अत्र निर्णयामृते चन्द्रषष्ठीव्रतमुक्तं तत्र चन्द्रोदयव्यापिनी ग्राह्या। उभयत्र तत्सत्त्वे पूर्वा।
"तद्वे भाद्रपदे मासि षष्ठ्यां पक्षे सितेतरे ।
चन्द्रषष्ठीव्रतं कुर्यात्पूर्ववेधः प्रशस्यते ॥"

स०७–शीतलाव्रते सप्तमी पूर्वयुता ग्राह्येति निर्णयसिन्धुस्थहेमाद्रौ । माधवीये मध्याह्नव्यापिनी उभयदिने तत्त्वे पूर्वा युग्मवाक्यादिति ॥

अ०८–इयं जन्माष्टमी जयन्ती च तत्र जन्माष्टम्यां निशीथवेध एव ग्राह्यः ।
"अष्टमी शिवरात्रिश्च ह्यर्द्धरात्रादधो यदि ।
दृश्यते घटिका या सा पूर्वविद्धा प्रकीर्तिता" ॥
इति माधवीये पुराणान्तरात् । 'अर्द्धरात्रे तु रोहिण्याम्' इत्यादिभविष्योक्तेः । वेधोर्द्धरात्रेऽष्टम्या न तु सप्तम्याः ।
"अष्टमी रोहिणीयुक्ता निश्यर्द्धे दृश्यते यदा ।"
इत्यादिवसिष्ठसंहितोक्तेश्च । अष्टमी द्वेधा रोहिणीरहिता तद्युता च ।तत्रापि चतुर्धा पूर्वद्युरेव निशीथयोगिनी परेद्युरेवोभयेद्युरनुभयेद्युश्चेति। तत्राद्ययोः पक्षयोरसन्देह एव कर्मकालव्याप्तेः ।
"जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।

पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम्॥"
इति भृगूक्तेः।अस्मात्केवलरोहिण्युपवासोऽपि सिद्धः।
अन्त्ययोः परैव । प्रातःसंकल्पकालव्याप्तेराधिक्यात्।
"वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी।"
इति ब्रह्मवैवर्ताच्च-एवमंशतः समव्याप्तावपि विषमव्याप्तौ व्याधिक्येन निर्णयः। रोहिणीयुतापि चतुर्धा पूर्वेद्युरेव निशीथे रोहिणीयुता परेद्युरेवोभयेद्युरनुभयेद्युश्चात्राद्ययोरसन्देहः।
"कार्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी।"
इति पाद्मोक्तेः।'जयन्त्यां पूर्वविद्धायाम्'इत्यादिगारुडाच्च। 'सप्तमी' इत्यादिवह्निपुराणाच्च । द्वितीये त्वसन्देह एव। तृतीयपक्षे परैव। "वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी।" इत्यादिब्रह्मवैवर्तात् । चतुर्थेऽपि त्रेधा पूर्वेद्युर्निशीथेऽष्टमी परेह्नि रोहिणी परेद्युरष्टमी पूर्वेह्नि रोहिणी उभयेद्युरुभयस्य निशीथाऽसम्बन्धो वेति । आद्ये परेद्युर्जयन्तीयोगस्य सत्त्वात्परैवेति माधवः। यस्मिन्नित्याद्युक्तेः।
"पूर्वविद्धाऽष्टमी या तु उदये नवमीदिने ।
मुहूर्तमपि संयुक्ता संपूर्णा साष्टमी भवेत् ॥
कला काष्ठा मुहूर्तापि यदा कृष्णाष्टमी तिथिः ।
नवम्यां सैव ग्राह्या स्यात्सप्तमीसंयुता नहि॥"

इति पाद्माच्च । केचित्तु हेमाद्रावष्टम्याः प्राधान्या-त्तस्याश्च पूर्वेद्युः कर्मकालव्यापित्वात्पूर्वैव । पाद्मं तु पूर्वेह्नि निशीथेऽष्टम्यभावे ज्ञेयम्। अन्तर्भावस्तु मूर्ख-दन्धुणमित्याहुः। अन्ये तु 'पूर्वविद्धाष्टमी' इति वाक्ये जन्माष्टम्यां सूर्योदये सप्तमीवेधनिषेधात्कलाघटिका-मात्राप्यौदयिकी ग्राह्या।'कार्या विद्धापि सप्तमी'इति जयन्तीपरं तत्राप्यपवादद्वयं भवत्येव। यदा तु केवला ष्टमी शुद्धाधिकात्यागहेतोः सप्तमीवेधस्याभावात्पूर्वैव। यदिवा विद्धन्यूना तदा परदिने ग्राह्यतिथेरभावात्पूर्वैव। एवं सर्वाण्यौदयिकवाक्यानि सप्तमीवेधपराणि । तत्त्वं तु अष्टम्याः कर्मकालव्याप्ते, 'दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणी कला। रात्रियुक्तं प्रकुर्वीत' इति पूर्ववाक्यैः रोहिणीयोगाभावे ग्राह्यत्वोक्तेर्वचना-त्कर्मकालव्यापिनीं त्यक्त्वा पूर्वा परा्वा वा रोहिणी-युता जयन्त्यां ग्राह्या। माधवमदनरत्ननिर्णयामृता-नन्तभट्टगौडमैथिलग्रन्थेष्वप्येवम्।युक्तन्तूपवासद्व-यमत्रेति वयं ब्रूमः द्वयोर्नित्यत्वात् । अन्त्ययोः परैव सप्तमीत्यादिस्कान्दात् ।

"मुहूर्तेनापि संयुक्ता संपूर्णा साष्टमी भवेत् ।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥"

इति पाद्माच्च । जयन्तीभेदेषु यदि सोमबुध-

वारयोगो भवति तदा फलाधिक्यम् । पारणं तु अर्द्ध-रात्रेऽपि तिथिभान्तेऽन्यतरान्ते वेति मुख्यः पक्षः । 'तिथिरष्टगुणं हन्ति' इत्यादिब्रह्मवैवर्तात् । 'तिथ्यर्क्ष-योर्यदा च्छेदः' इत्यादि हेमाद्रौ वचनाच्च। गौडास्तु 'तत्र निशि' इत्यादिब्रह्माण्डात्सार्द्धप्रहरमध्ये रात्रौ कार्यमित्याहुः । अशक्तौ जन्माष्टमीमात्रव्रतिन-स्तिथ्यन्ते रोहिणीसहिताष्टमीव्रतिनो रोहिण्यन्ते इति। शेषमनुक्तमिह निबन्धेषु द्रष्टव्यं विस्तरभिया न लिखितम् । शङ्खचक्राङ्कितवैष्णवानां व्रते सिंहार्क-सत्त्वे एव भाद्रे जन्माष्टमीव्रतमिदं भवति तदभावे ते चाश्विने कुर्वन्ति । अत्र चन्द्रार्घदानमपि ।

न० ९—अत्र निर्णयामृते देव्युत्थापनमुक्तमुदयव्यापिन्याम् ।

द० १०-... ... ... ... ...

ए० ११-... ... ... ... ...

द्वा० १२-इयमघोरद्वादशी पूर्वविद्धेति माधवः । अत्रोदये त्रिमुहूर्त्तात्मक एकादशीवेधो ग्राह्यः ।

त्र० १३-इयं गौणचान्द्रभेदेन युगादिः 'नभस्ये च त्रयोदशी' इति प्रागुक्तेः । तत्रापराह्णव्यापिनी ।

च० १४-इयमघोरचतुर्दशी । तथा च गौडग्रन्थे भविष्योत्तरे-

"भाद्रे मास्यसिते पक्षे अघोराख्या चतुर्दशी ।
तामुपोष्य नरो याति शिवलोकमयत्नतः॥"

इति। तत्राऽपराह्णप्रदोषनिशीथाःकालामुख्यानुकल्पाः।
तत्राऽपराह्णप्रदोषौमुख्यौ । तत्रापि सायं त्रिमुहूर्तवेधो
मुख्यो द्विमुहूर्तवेधोऽनुकल्प इति माधवरामप्रकाशौ।

अ० ३०-इयं कुशग्रहणी । अस्यां पूर्वाह्णे कुशग्रहणं कार्यम्। मदनरत्ने तु महालयान्तर्गतदर्श उक्तः । गौणमुख्यत्वान्द्राऽपायत्रैव भाद्रकृष्णामायां युक्तमिति भाद्रस्याधिक्ये शुद्ध एव ।

## भाद्रशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः।

प्र० १-अत्र फलमण्डलव्रतं तच्च पूर्वाह्णव्यापिन्यां कार्यम् । उभयदिने पूर्वाह्णप्रतिपत्सत्त्वे मण्डलव्रतमजापतिदानव्रताद्युत्तरविद्धायां वृद्धौ क्षये च पूर्वविद्धायामिति माधवः।रामप्रकाशेपि पूर्वाह्णएव।अस्मन्तभास्करे तु

"रुद्रव्रतेषु सर्वेषु कर्तव्या सम्मुखी तिथिः ।"

इति ब्रह्मवैवर्तात् सायंकालव्यापिन्यां पूर्वविद्धायां रुद्रव्रतमित्युक्तं निर्णयामृतेऽपि । तत्र महत्तमाख्यं रुद्रव्रतं, फलमंडलाख्यव्रतं तु प्रजापतिदैवतमेवमनयोः पृथक्त्वे महत्तमाख्ये सायंकालव्यापिनी द्वितीये पूर्वाह्णव्यापिनीति युक्तम् ।

द्वि०२-अत्र नीलाम्बरदर्शनमुदयव्यापिन्याम् ।

तृ०३-अत्र हरितालिकाव्रतं तत्रोदयव्यापिनी ग्राह्या।

"चतुर्थीसहिता या तु सा तृतीया फलप्रदा ।
अवैधव्यकरी स्त्रीणां पुत्रपौत्रप्रवर्द्धिनी॥"

इति माधवोक्तेः । द्वितीयाशेषसंयुक्तां निषेधति तत्रैवापस्तम्बः—

"द्वितीयाशेषसंयुक्तां या करोति विमोहिता ।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः॥"

इति । तृतीयावृद्धावपि परैव निर्णयसिन्धौ।जस्मन्तभास्करेऽप्येवम् । क्षये त्वियं पूर्वा। परेह्नि नास्ति चेत्पूर्वविद्धाप्युक्ता व्रतान्तरे इति माधवोक्तेः । अत्र कोटीश्वरव्रतं हस्तिगौरीव्रतञ्च । तत्र हारितालिक एव कालः । इयं मन्वादिस्तत्र पूर्वाह्णव्यापिनी । इयं वराहजयन्त्यपराह्णव्यापिनी । अत्र गुडापूपपायसदानं वामदेवप्रीतये । तच्चोदयव्यापिन्यां वृद्धौ परेह्नि। भाद्रस्याधिक्ये हारितालिकादिव्रतं शुद्ध एव कार्यम् ।

च०४—इयं सिद्धविनायकव्रते मध्याह्नव्यापिनी ग्राह्या।'प्रातः शुक्लतिलैः'इत्यादि हेमाद्रौ भविष्योक्तेः।मदनरत्नेऽप्येवम् । परदिन एवांशेन साकल्येन वा मध्याह्नव्याप्त्यभावे सर्वपक्षेषु पूर्वा ग्राह्या । तथा च निर्णयसिन्धुस्थवृहस्पतिः—

"चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।
मध्याह्नव्यापिनी चेत्स्यात्परतश्च परेहनि॥"

इति । माधवोऽप्येवम् । जस्मन्तभास्करे—पूर्वदिने मध्याह्ने चतुर्थ्यभावे परदिने एव । तत्सत्त्वे नागविद्धा।

उभयत्र तत्सत्त्वे पूर्वा 'मातृविद्धो गणेश्वर' इति वचनात् । अत्र रविभौमवारयोगेऽतिप्राशस्त्यम् । अत्र चन्द्रदर्शननिषेधः । तद्दर्शने तु प्राङ्मुख उदङ्मुखो वा—

"सिंहःप्रसेनमवधीत्सिंहो जाम्बवता हतः ।
सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः ॥"

इति मन्त्राभिमन्त्रितं जलं पिबेत् । अत्र कपर्दीश्वरव्रतं तत्र प्रदोषव्यापिनी ।

पं०८—इयमृषिपञ्चमीव्रते मध्याह्नव्यापिनी ।

"पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः ।"

इति माधवीये हारीतोक्तेः । दिनद्वये मध्याह्ने तत्सत्त्वेऽसत्त्वे वापि पूर्वेति माधवनिर्णयसिन्धुमदनरत्नव्रतार्कजस्मन्तभास्कराः । 'युगभूतानाम्' इति युग्मवाक्यात् । यत्तु हेमाद्रिदीपिकयोः परेति । 'पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद'। इत्यापस्तम्बीयेऽस्ति तद्युक्तम् ।

"चतुर्थीसंयुता कार्या पञ्चमी परया न तु ।
दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते ॥"

इति हारीतेन पक्षद्वयेऽपि पूर्वाया एव विधानात् ।

"श्रावणे पञ्चमी शुक्ला संप्रोक्ता नागपञ्चमी ।
तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः॥"

इति स्मृत्यन्तराच्च । हेमाद्र्यादिवाक्यं तु नागपूजाविषयत्वेन भवतु समाहितम् ।

षष्ठी६-सौरषष्ठीयं पूर्वाह्णव्यापिनी । इयं सूर्यषष्ठी सूर्यव्रते सप्तमीयुतेति निर्णयसिन्धुः। अस्मिन्त भास्करे मध्याह्नव्यापिनी । उभयत्र तत्त्वे परेति । यदा द्वादशघटिका प्रातः पञ्चमी तदा परा । तन्न्यूनपञ्चमीसत्त्वे पूर्वेति माधवः । इयं दक्षिणापथस्कन्ददर्शने पूर्वाह्णव्यापिनी । इयं योगवशाच्चम्पा च । तन्निर्णयो मार्गशुक्लषष्ठ्या निर्णये द्रष्टव्यः ।

स०७-इयं देवीपूजने परा । अत्र मुक्ताभारणव्रतमुक्तं व्रतार्के । तत्र मध्याह्नव्यापिनी । अत्र संतानसप्तमीव्रतारम्भस्तत्रापि मध्याह्नव्यापिन्येव ।

अष्टमी८-इयं दूर्वाष्टमी पूर्वा ग्राह्या । 'श्रावणी दुर्गनवमी पूर्वा' इत्यादि हेमाद्रौ ब्रह्मवैवर्तोक्तेः । 'शुक्लाष्टमी' त्यादिपुराणान्तराच्च । यत्तु—

"मुहूर्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा ।
दूर्वाष्टमी तु सा कार्या ज्येष्ठां मूलं च वर्जयेत् ॥"

इति । तत्रैव परा कार्येत्युक्तं तत्पूर्वदिने ज्येष्ठादियोगे द्रष्टव्यम् ।

"दूर्वाष्टमी सदा त्याज्या ज्येष्ठामूलर्क्षसंयुता ।"

तथा—

"ऐन्द्रर्क्षे पूजिता दूर्वा हन्त्यपत्यानि नान्यथा ।
भर्तुरायुर्हरा मूले तस्मात्तां परिवर्जयेत् ॥"

इति तत्रैव तन्निषेधात् । इदं व्रतमगस्त्योदये कन्या-
ऽर्के च न कार्यम् ।

"शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी ।
सिंहार्क एव कर्तव्या न कन्यर्क्षे कदाचन ॥
सिंहस्थे सोत्तमा सूर्येऽनुदिते मुनिसत्तम ।"

इति मदनरत्ने स्कान्दोक्तेः ।

"अगस्त्य उदिते तात पूजयेदमृतोद्भवाम् ।
वैधव्यं पुत्रशोकं च दश वर्षाणि पञ्च च ॥"

इति तत्रैव दोषोक्तेः। अत्रागस्त्योदये भाविनि सति पूर्व-
कृष्णाष्टम्यामेव कुर्यादिति हेमाद्रिदीपिकादिसर्व-
निबन्धसिद्धांतः। निषेधस्य प्रथमारम्भपरत्वादगस्त्यो-
दये कन्यार्के च भाद्रकृष्णाष्टम्यामुक्तं, तन्न युक्तमिति
रामप्रकाशः। इयं च स्त्रीणां नित्यम्। यदा ज्येष्ठादिकं
विनाऽष्टमी न लभ्यते तदैकभक्तं कार्यम् ।

"कर्तव्या चैकभक्तेन ज्येष्ठा मूलं यदा भवेत् ।
दूर्वामभ्यर्चयेद्भक्त्या न वन्ध्यं दिवसं नयेत् ॥"

इति। अत्र दूर्वया शिवपूजनमनग्निपक्वान्नाक्षारलवणा-
शनञ्च पुत्रार्थिन्या कार्यमिति निर्णयसिन्धुः। माध-
वीये सायंकालव्यापिनी पूर्वविद्धा,शेषं समानम्।शिव-
शक्त्योरुत्सवे तु नवमीविद्धोक्ता । अधिमासे तु
दूर्वाव्रतमर्वाक्कार्यम् । 'अधिमासे त्वि'त्यादिनिर्ण-

यदीपस्थस्कान्दात्।अत्र ज्येष्ठापूजोक्ता माधवीये। तत्र ज्येष्ठायोगवशेन पूर्वा परा वा ग्राह्या। दिनद्वये परा। पूर्वेह्नि रात्रियोगे पूर्वेति तस्यापवादः।
"यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः।
तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे॥"
इति। दूर्वाव्रतं केवलतिथौ, ज्येष्ठाव्रतं तु केवलर्क्षे। तत्राऽनुराधायामावाहनं ज्येष्ठायां पूजा मूले विसर्जनम्। जस्मन्तभास्करेऽप्येवम्। अत्र महालक्ष्मीव्रतारम्भस्तत्र निशीथव्यापिनी व्रतार्के।

न०९—अत्र निर्णयामृते नन्दापूजोक्ता। तत्र पूर्वाह्णमध्याह्नौ गौणमुख्यौ। रामप्रकाशेऽप्येवम्।

द०१०—अत्र दशावतारव्रतपूजनसौवर्णतत्प्रतिमादानाऽपूपदानादि मध्याह्नव्यापिन्यामुक्तं स्कन्दपुराणे, इदं दशवर्षपर्यन्तं कर्तव्यमिति च।

ए११०—अत्र सन्ध्यायामङ्गपरिवर्तनमुक्तं मात्स्ये—
"निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्तनम्।"
इति।इयं वामनजयन्ती।तत्र मध्याह्नव्यापिनीतिजस्मन्तभास्करः। अत्र वामनपूजा द्वादश्यां दानमिति व्रतार्के। अत्र कटिसूत्रदानमपि।अन्ये तु एकादश्यां सन्ध्यायां विष्णुपूजनं द्वादश्यां परिवर्त्तनमाहुः।

द्वा० १२-अत्र शक्रध्वजोत्थापनमुक्तमपरार्के गर्गेण ।
"द्वादश्यां तु सिते पक्षे मासि भाद्रपदे तथा ।
शक्रमुत्थापयेद्राजा विश्वश्रवणवासवे ॥"
उत्तराषाढाश्रवणधनिष्ठासु । इयमेव श्रवणद्वादशी । तत्रैकादश्यां द्वादशीश्रवणयोगे सैवोपोष्या।'एकादशी' इत्यादिविष्णुधर्मोक्तेः।नारदीयमात्स्ययोरप्येवम्। दिनद्वये द्वादशीश्रवणयोगेपि पूर्वा। हेमाद्रिमते एकादश्याः श्रवणयोगाभावेऽपि तद्युतद्वादशीयोगमात्रेणविष्णु शृङ्खलं भवति। निर्णयामृतमते तु श्रवणस्यैकादशी-द्वादशीभ्यां योग एव तन्नान्यथेति । यदा निशीथानन्तरं सूर्योदयावधि वा कलामात्रमपि श्रवणर्क्षं भवति तदापि पूर्वैव'तिथिनक्षत्रयोः' इत्यादि तत्रैव नारदीयात् । इयं बुधवारयोगे अतिप्रशस्ता । यच्चोदयव्यापिनीति तच्छुद्धाधिका द्वादशी परदिने एवोदये श्रवणयोगः पूर्वेह्नि च तादृशे काले योगस्तत्परं दिनद्वये उदययोगे संपूर्णत्वात् पूर्वैव। श्रवणद्वादशीव्रतं तु श्रवण युक्ताया द्वादश्या अलाभे एकादश्याश्च तद्युक्तायाःलाभे तत्रैव कार्यम्।'यदा न' इत्यादिमदनरत्ने नारदीयात् । यदा परैव श्रवणयुता तदा परा। तत्र शक्तेनोपवासद्वयं कार्यमशक्तेनैकादशीनियमवतैकादश्यामेवानियमवता द्वादश्यामेव । अत्र पारणन्तूभयान्तेऽन्यतरान्ते वा

तिथ्यन्ते मुख्यम् । अत्र मध्याह्ने वामनावतार-स्तत्र तद्व्यापिनी । अत्र दुग्धव्रते पूर्वाह्णव्यापिनी ।
इयं कल्किद्वादशी ।

त्र०१३-अत्र गोत्रिरात्रिव्रतमुक्तं स्कान्दे । कैश्चिच्चाश्विना सितत्रयोदश्यामुक्तम् । नक्तकालोऽस्य व्रतार्के ।

च०१४-इयमनन्तचतुर्दशी।अत्रोदये मुहूर्त्तमात्रायां घटिका-मात्रायां वा अनन्तव्रतमुक्तं भगवन्तभास्करे तिथि-दर्पणे च ।

" मुहूर्त्तमपि चेद्भाद्रे पूर्णिमायां चतुर्दशी ।
संपूर्णां तां विदुस्तस्यां पूजयेद्विष्णुमव्ययम्॥"

इत्याद्युक्तेः ।

"उपवासव्रतादीनां घटिकैकापि या भवेत् ।"

इति रामप्रकाशस्थकाण्वोक्तेः

"उपवासादिविषये घटिकैका तु या भवेत् ।
उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी ॥"

इत्याद्युक्तेश्चात्र घटिकापदं मुहूर्त्तस्यैव स्तावकमित्य-पि तत्रैव । निर्णयसिन्धुदीपिकयोर्मध्याह्नव्यापिनी-ति मतं, तन्न मनोहरं 'पूर्वाह्णो वै देवानाम्' इत्यादिश्रु-त्या 'पूर्वाह्णे दैविकं कर्म'त्यादिस्मृत्या च पूर्वाह्णस्य दैवे विधानात् ।

"तृतीयैकादशी षष्ठी अष्टमी च चतुर्दशी ।
पूर्वविद्धा क्रियमाणा धनापत्यहरा स्मृता ॥"

इतिरामप्रकाशस्थहेमाद्रिवचनेऽनिष्टफलोपलम्भाच्च। 'मध्याह्ने भोज्यवेलायामि' त्यत्र गणेशचतुर्थ्यामिव 'मध्याह्ने पूजयेदि' ति न विधिनापि लिङ्गकल्पः श्रूयते। 'मध्याह्न' इत्यधिकरणकारकस्य ददर्शेति प्रधानक्रियायामेवान्वयेऽर्चयन्तमिति लट्प्रत्ययस्य"वर्त्तमानसामीप्ये वर्त्तमानवद्वा"इत्यनुशासनवशेनानिश्चितकालार्थतया मध्याह्नइतिभूतार्थवादगतस्य लिङ्गस्यान्यथा व्युपपादयितुं शक्यत्वेनाकिञ्चित्करत्वादुदयव्यापिन्येव ग्राह्या।

"पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्॥"

इति वचनारम्भस्तु चतुर्दशीक्षये निषिद्धत्रयोदशीयुतचतुर्दश्यामेव तद्विधानार्थं वृद्धौ च 'मुहूर्त्तमपि चेद्भादे' इत्यादियुग्मवाक्योपोद्वलकशास्त्रमुपेक्ष्य पूर्वदिन एव तद्विधानार्थमिति। जस्मन्तभास्करे तु त्रिमुहूर्त्तव्यापिनी मुख्या द्विमुहूर्त्ताऽनुकल्पा। तन्न्यूना पूर्वेति। माधवीयव्रतार्कयोरप्येवम्, तन्मतमपि हेयम्। उदये द्विमुहूर्त्तव्यापिमुख्यः कल्पो मुहूर्त्तोऽनुकल्प इति जाबालोक्तेरिति रामप्रकाशः। तिथेर्द्विमुहूर्त्तव्यापित्वेघटिकामात्रव्यापित्वेऽप्युदयसम्बन्धेनानन्तव्रतमित्येषा व्यवस्था गौडसम्मतापीति निर्णया-

मृते। युक्ता चैषा दिनद्वयेप्यौदयिकत्वे संपूर्णत्वात्पूर्वाक्षये च पूर्वेति निर्णयसिन्धुभगवन्तभास्करादिसर्वनिबन्धसिद्धान्तः । अत्र पूर्वाह्णे कदलीव्रतमुक्तं व्रतार्के ।

पू० १५–इन्दुलेयं पूर्णिमा माधवीयदीपिकयोः परा। निर्णयाऽमृतेऽत्र लोकपालपूजोक्ता पूर्वाण्हे । पूर्वाभाद्रपदायोगे सति विशेषतः ।

## आश्विनकृष्णप्रतिपदादितिथिनिर्णयः ।

प्र० १–महालयारम्भः ।

द्वि०२–अत्राप्यशून्यशयनव्रतमेतन्निर्णयः श्रावणकृष्णद्वितीयायां कृतोऽस्मकाभिस्तत्र द्रष्टव्यः ।

तृ०३–अत्र ललितादेवीयात्रोक्ता काशीखण्डे–

"इषकृष्ण तृतीयायां ललितां प्रतिपूज्य वै ।
नारी वा पुरुषो वापि लभते वाञ्छितं फलम्॥"

इत्यत्र पूर्वाण्हमध्याह्नौ मुख्यानुकल्पौ । व्रतार्केत्र बृहद्गौरीव्रतमुक्तं चन्द्रोदयव्यापिन्याम् ।

च०४–... ... ... ... ...

पं०५–... ... ... ... ...

ष०६–इयं योगविशेषेण कपिला । तथा च वाराहे–

"नभस्ये कृष्णपक्षे तु रोहिणीपातभूसुतैः ।
युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता ॥

व्रतोपवासनियमैर्भास्करं तत्र पूजयेत् ।
कपिलाश्च द्विजाग्र्याय दत्वा क्रतुफलं लभेत्॥" इति।
अत्र नभस्य इति शुक्लपक्षादिमासाभिप्रायम्।निर्ण-
यामृते हेमाद्रौ चैवम् । हस्तार्कस्तु फलातिशयार्थः।
"संयोगे तु चतुर्णां वै निर्दिष्टा परमेष्ठिना ॥"
इति तत्रैवोक्तेः । इयमेव चन्द्रषष्ठी सा चन्द्रोदयव्या-
पिनी ग्राह्या।उभयत्र तथात्वे पूर्वा। तदुक्तं भविष्ये–
"तद्वद्भाद्रपदे मासि षष्ठ्यां पक्षे सितेतरे ।
चन्द्रषष्ठीव्रतं कुर्यात्पूर्ववेधः प्रशस्यते ॥
चन्द्रोदये यदा षष्ठी पूर्वाह्णे वा परेऽहनि ।
चन्द्रषष्ठ्यासिते पक्षे सैवोपोष्या प्रयत्नतः ॥"
इति निर्णयसिन्धुजस्मन्तभास्करभगवन्तभा-
स्कराः ।.

सप्तमी७–... ... ... ... ...

अ०८-अत्र महालक्ष्मीव्रतं तत्र चन्द्रोदयव्यापिनी ग्राह्या परदिने चन्द्रोदयादूर्ध्वं त्रिमुहूर्तव्यापित्वे परैव कार्याऽन्यथा पूर्वैव ।
"पूर्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा ।
त्रिमुहूर्तापि सा पूज्या परतश्चोर्ध्वगामिनी ॥"
इति मदनरत्ने निर्णयामृते च संग्रहोक्तेः ।
"अर्द्धरात्रमतिक्रम्य वर्तते योत्तरा तिथिः ।

तदा तस्यां तिथौ कार्यं महालक्ष्मीव्रतं सदा ॥”
इति वचनाच्च । माधवीयव्रतार्करामप्रकाशनिर्णयामृतनिर्णयसिन्धुजस्मन्तभास्करभगवन्तभास्करा अप्येवम्। व्रतार्केऽत्राशोकाष्टमीव्रतमुक्तं हेमाद्रावादित्यपुराणे–
“अष्टमीषु च सर्वासु पूजनीयाप्यशोकका ।
गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥
तस्मिन्नहनि या भुङ्क्ते नक्तमिन्दुविवर्जितम् ।
भवत्यथ विशोका सा यत्र यत्राभिजायते ॥
अष्टमीषु च सर्वासु न चेच्छक्नोति वै मुने ॥
प्रौष्ठपद्यामतीतायां या स्यात्कृष्णाष्टमी द्विज ।
तत्र कार्यं व्रतं त्वेतत्सर्वकामफलप्रदम् ॥” इति ।
इदं नक्तव्रतमत्रेन्दूदयात्प्राग्व्रतकालः । अत्र महालक्ष्म्यशोकाष्टम्युभयव्रतवतीनां प्रथममशोकपूजनं ततो महालक्ष्मीपूजनादीदमेकदिन एवोभयप्राप्तौ ज्ञेयम्। तद्भिन्नत्वे तु तत्तत्कालव्यापिन्यौ ग्राह्ये ।

न०९–अत्र देवीप्रबोध उक्तो रामप्रकाशे ।

द०१०– ... ... ... ... ... ...

ए०११– ... ... ... ... ... ...

द्वा०१२– ... ... ... ... ... ...

त्र०१३–अत्र पिण्डरहितं श्राद्धमवश्यं कार्यम् । तदुक्तं शातातपेन–

"पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते।
स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते ॥
अक्षय्यदक्षिणां स्वस्तिसौमनस्ये तथास्त्विति॥"

हेमाद्रौ वृद्धपराशरः—

"युगादिषु मघायां च विषुवत्ययने तथा ।
भरणीषु च कुर्वीत पिण्डनिर्वपणं नहि ॥"

इति । अत्र गजच्छायायोगे फलातिशय उक्तः ।
तत्र गजच्छायामाह श्रुतौ रामप्रकाशे—

"कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः ।
यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते ॥"

तथा—

"मघायां पिण्डदानेन ज्येष्ठपुत्रो विनश्यति॥"

इत्यादिवाक्यद्वयं मघांशे त्रयोदश्यतिरिक्ततिथिसम्बन्धे श्राद्धनिषेधविषयकं ज्येष्ठपुत्रवद्विषयं केवलनक्षत्रविहितश्राद्धनिषेधविषयकं वा बोध्यम्। मघायुक्तत्रयोदश्यां श्राद्धविधानस्यावश्यकत्वादिति रामप्रकाशः।क्षयाहविषयकमिति दीपिका। अन्ये त्वपिण्डकं श्राद्धमत्र कर्तव्यमित्याहुः ।

च०१४—... ... ... ... ...
अ०२०—... ... ... ... ...

## आश्विनशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः।

प्र० १–अत्र नवरात्रव्रतारम्भस्तत्र पूर्वाण्हव्यापिनी । तदुक्तम्

"आश्विनस्य सिते पक्षे नवरात्रमुपोषितः ।
सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम् ॥"

इति । उभयदिने तत्त्वे ।

"न दर्शकलया युक्ता प्रतिपच्चण्डिकार्चने ।
उदये द्विमुहूर्त्तापि ग्राह्या सोदयगामिनी ॥"

इति निर्णयसिन्धुभगवन्तभास्करयोः । जस्मन्तभास्करे तु त्रिमुहूर्तव्यापिनी गौडनिबन्धेमुहूर्त्तव्यापिनी। एते पक्षा अमानिषेधपराः । यानि तु नृसिंहप्रासादे द्वितीयायुतप्रतिपन्निषेधकवाक्यानि लिखितानि तानि प्रतिपद्वृद्धिक्षयविषयाणीति तिथिवृद्धौ क्षये च पूर्वा प्रतिपद्ग्राह्या। कलशस्थापने चित्रावैधृतिनिषेधो भार्गवार्चनदीपिकायां देवीपुराणे–

"त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चण्डिकार्चने ।
तयोरन्ते विधातव्यं कलशारोपणं गृहे॥"

इति । चित्रावैधृतियुतापि द्वितीयायुता चेत्सैव ग्राह्येत्युक्तंदुर्गोत्सवे–

"भद्रान्विता चेत्प्रतिपत्तु लभ्यते विरुद्धयोगैरपि संयुता सती।सैवाऽपराह्णे विबुधैर्विधेया श्रीपुत्रराज्यादिविवृद्धिहेतुः॥" इति ।

यदा तु वैधृत्यादिपरिहारेण प्रतिपन्न लभ्यते तदोक्तं तत्रैव कात्यायनेन–

"प्रतिपद्याश्विने मासि भवो वैधृतिचित्रयोः ।
आद्यपादौ परित्यज्य प्रारभेन्नवरात्रकम् ॥"

भविष्ये पूर्वपादत्रयं त्यक्तम् । रुद्रयामले तु सम्पूर्णप्रतिपदि चित्रावैधृतिसत्त्वे मध्यदिनेऽभिजिन्मुहूर्त्ते कलशस्थापनमुक्तं चित्रानिषेधमूलं चिन्त्यम्। इदं कलशस्थापनं दिवैव न रात्रौ ।तदुक्तं-
"न रात्रौ स्थापनं कार्यं न च कुम्भाभिषेचनम्"
इति ।। अत्र सूतकेऽपि व्रतं कार्यं ब्राह्मणभोजनादि सूतकान्ते। मलमासे त्वयं नवदुर्गोत्सवः शुद्धे कार्य इति निर्णयसिन्धुजस्मन्तभास्करादिमतम् । इयं स्नानदानयोरुदयव्यापिनी ।

द्वि०२—इयमुमाशिवाभिपूजने पूर्वाह्णव्यापिनी दीपिकायामुभयत्र तत्त्वे च परेत्यपि । इयं स्नानदानयोरुदयव्यापिनी ।

तृ०३—... ... ... ... ...

च०४—... ... ... ... ...

पं०५—इयमुपाङ्गललिता मध्याह्नव्यापिनी ग्राह्यातत्रैव पूजाविधानात् । माधवीयेऽप्येवम् । जस्मन्तभास्करेऽपि दिनद्वये तत्सत्त्वेऽसत्त्वे वा पूर्वेत्यपि च युग्मवाक्यात्पूर्वविद्धेति निर्णयसिन्धुः । व्रतार्केऽप्येवम् ।

प०६—अत्र सायंकाले ज्येष्ठर्क्षयुतायां षष्ठ्यां बिल्वाभिमन्त्रणम् । मूलयुतसप्तम्यां पत्रिकाप्रवेशः । पूर्वाषाढा-

युताष्टम्यां पूजाहोमादि। उत्तराषाढायुतनवम्यां पूजाबलिदानादि। श्रवणयुतदशम्यां विसर्जनम्। तत्तत्तिथौ तत्तन्नक्षत्राभावे केवलतिथौ कार्यमिति निर्णयसिन्धुः।

स०७–इयं देवीपूजायां परयुता ग्राह्या।

"युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया।
रवेस्तूदयमीक्षन्ते न तासु तिथियुग्मता॥"

इति। निर्णयसिन्धावप्यौदयिकी युगाद्येत्याद्युक्तकृत्यतत्त्वार्णवोदाहृतवचनात्। भगवत्याःप्रवेशादिविसर्जान्ताश्च याः क्रियाः। तिथावुदयगामिन्याम्' इत्यादितिथितत्त्वे नन्दिकेश्वरपुराणाच्च। दुर्गाभक्तितरङ्गिण्यामप्येवम्। उदये घटिकातो न्यूनत्वे परेति व्रतोपवासेत्यादिदेवलोक्तेरिति गौडाः। दाक्षिणात्यास्तु युग्मवाक्यात्पूर्वे कुर्वन्ति। पत्रिकापूजा तु पूर्वाण्ह एव कार्या। अत्रैवमूलर्क्षे पुस्तकस्थापनमुक्तं रुद्रयामले–

"मूलर्क्षे सुराधीश पूजनीया सरस्वती।
पूजयेत्प्रत्यहं देवं यावद्वैष्णवमृक्षकम्॥
नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन।
पुस्तके स्थापयेद्देवीं विद्याकामो द्विजोत्तमः॥
मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्॥"

निर्णयसिन्धौ तु मूलश्रवणापपादे स्थापनविसर्जने उक्ते।

अ०८—महाष्टमीयं परयुता ग्राह्या 'सप्तमीवेधसंयुक्ते' त्यादिवचनात् ।
"सप्तमी कलया यत्र परतश्चाष्टमी भवेत् ।
तेन शल्यमिदं प्रोक्तं पुत्रपौत्रक्षयप्रदम् ॥"
इत्यादिवचनाच्च । यदा त्रिमुहूर्त्तन्यूनाष्टमी तदा पूर्वा क्षये च पूर्वा इति जस्मन्तभास्करे । यदा त्रिमुहूर्त्ता सप्तमी तदा घटिकामात्राप्यौदयिकी ग्राह्या । 'व्रतोपवासे'त्यादिदेवलोक्तेः। माधवनिर्णयसिन्धुदीपिकागौडनिबन्धमदनरत्नेष्वप्येवम्। अत्र मूलर्क्षसोमवारसत्त्वेऽतिप्राशस्त्यम् ।

न९०—महानवमीयं पूर्वविद्धा ग्राह्या युग्मवाक्यात्। 'श्रावणी दुर्गनवमी' त्यादि पाद्मोक्तेश्चेति राजमार्त्तण्डे। जस्मन्तभास्करेऽप्येवम्। मूलादिनक्षत्रत्रयवती तु महतीत्यादि मदनरत्ने लैङ्गात् । अत्र वेधश्च मुहूर्त्तत्रयेणैव ज्ञेयः।यद्यपि हेमाद्रौ मुहूर्त्तद्वयात्मापि वेधोऽस्ति सोपि सूर्योदय एव सायं तु त्रिमुहूर्त्त एव।तदुक्तं कालनिर्णये—'त्रिमुहूर्त्तगा तु सकला सायम्' इति। माधवोपि 'सायन्तृत्तरया तद्वन्न्यूनया तु न विध्यते' इति। तेन त्रिमुहूर्त्तयोगे पूर्वा नवमी पूर्वोक्तवचनात्।'न कुर्यान्नवमीं तात दशम्यान्तु कदाचन' इति स्कान्दे परानिषेधाच्च । त्रिमुहूर्त्तयोगाभावे तु निषिद्धापि परैव कार्येति निष्कर्षः। अत्रैव बलिदानम्। रामप्रकाशे

महानवमी दुर्गापूजाबाह्येतरकर्माणि पूर्वविद्धा ग्राह्ये-त्युक्तं 'वसुरन्ध्रयोरि'ति युग्मात्। 'श्रावणी' त्यादिपाद्माच्च। अत्र नक्तोपवासयोः षड्दण्डन्यूनापि अष्टमीयुता नवमी ग्राह्या प्रधानकालव्यापित्वाद्बहुकालव्यापित्वाच्च। पूजाबलिदानयोर्मुहूर्तमात्रापि परा।' तिथावुदये'त्यादिवचनात्'सूर्योदय' इत्यादिवचनाच्च।पारणा तु दशम्याम्। अत्राशौचेऽपि न त्यागः 'प्रारब्धे सूतकं न स्यात्' इति वचनात्।सधवया विधवयापि रजोदर्शने पारणा कार्येति निर्णयसिन्धुः। इयं मन्वादिः पूर्वाण्हव्यापिनी जस्मन्तभास्करे निर्णयामृते च। अत्र रथनवमीव्रतं सौरव्रतञ्चोक्तं रामप्रकाशे।

द०१०-विजयदशमीयं नक्षत्रोदयव्यापिनी विजयादेवीपूजनादौ 'ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः'इति रत्नकोशात्।'तारकोदय'इति चिन्तामणिवचनाच्च। दिनद्वये तारकोदये तत्सत्त्वे पूर्वैव 'नवमीशेषसंयुक्ते' त्यादि भृगूक्तेः। दिनद्वये तारकोदये तदसत्त्वे परदिन एकादशे पञ्चदशे वा मुहूर्ते यात्रा कार्या।

आश्विने सितपक्षे तु दशम्यां सर्वराशिषु।
सायंकाले शुभा यात्रा दिवा वा विजये क्षणे।
एकादशो मुहूर्त्तोऽपि विजयः परिकीर्तितः।
तत्र सर्वविधातव्या यात्रा विजयकाङ्क्षिभिः।

इति भृगूक्तेः। यदा परदिनव्यापि श्रवणयुता

तदापि यात्रायां परैवेति जस्मन्तभास्करः। अत्राऽपराह्ण एकादशो मुहूर्तो मुख्यः कर्मकालस्तत्रैव पूजायुक्तेः। प्रदोषो गौणः। दिनद्वयेऽपराह्णव्यापित्वे पूर्वा प्रदोषव्याप्तेराधिक्यात्। दिनद्वये प्रदोषव्यापित्वे परा अपराह्णव्याप्तेराधिक्यात्। इदं शुद्धतिथावन्यकालेऽपराह्णेतरकाले। श्रवणस्तु रोहिणीवदप्रयोजकः। दिनद्वयेऽपराह्णास्पर्शे तद्व्याप्तौ वा श्रवणयुता पूर्वा तत्रापि परदिनेऽपराह्णे श्रवणसत्त्वे स्वल्पापि परैवेति निर्णयसिन्धुः। दशम्यामेव प्रस्थानं कार्यं नत्वेकादश्याम् आलस्यादिना।

"दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नृपः।
तस्य संवत्सरं राज्ञो न क्वापि विजयो भवेत्॥"

इति स्कान्दात्।नवमीयुतत्वं श्रवणा सम्भवे तत्सम्भवे तु दशम्यामेव प्रस्थानमपराजितापूजा चेतिउभयश्रवणाभावे दशम्यामेवेति निर्णयामृते। दिनस्यैकादशपञ्चदशौ मुहूर्तौ विजयसंज्ञौ। तत्रैकादशो मुख्यस्तत्राऽपराजितापूजनशमीपूजनयात्रादिकं कार्यं तदभावे गौणे पञ्चदशे मुहूर्ते यात्रा कार्या मानसी यात्रा तु पारिभाषिकतारकोदयरूपे विजये कार्या।

"दशम्यां तु नरैः सम्यक् पूजनीयाऽपराजिता।
ऐशानीं दिशमाश्रित्य त्वपराह्णे प्रयत्नतः॥"

मृन्मयकलश्यामपराजितास्थापनपूजादिकमिति। उद-
ये किञ्चिद्दशमी एकादश्यामपराह्णे श्रवणं तदैकादश्यां
श्रवणयुतायां प्रस्थानं पूजा च कार्या इति **रामप्रकाशः**।
शमीपूजा प्रस्थानात्पूर्वं परतो वेति च अपराजिता
पूजा पूर्वम्। इयं राज्ञां पट्टाभिषेके परा। अत्र
बुद्धावतारस्तत्र सायाह्नव्यापिनी **रामप्रकाशे**।

ए० ११—... ... ... ... ...

द्वा० १२—अत्र प्रातर्दलव्रतं संकल्पयेत्। इयं पद्मनाभद्वा-
दश्युक्ता **निर्णयामृते**। अत्रैकादश्यामुपवासो द्वादश्यां
दानादि।

त्र० १३—... ... ... ... ...

च० १४-इयं वाराही। अत्र पूर्वाह्णे पूजाव्रते त्वपराह्णव्यापिनी
मुख्या। प्रदोषोत्र गौणः।

पु० १५-अत्र कौमुदीलक्ष्मीपूजनादि तत्र निशीथव्यापिनी।
उभयत्र तत्त्वे पूर्वा युग्मवाक्यात्। इयमेव दीपि-
कामाधवीययोः परा, प्रदोषस्यारम्भकालत्वाच्च्या-
प्तेराधिक्यात्। प्रदोषोऽत्र सूर्यास्तादुपरि घटिकात्रया-
त्मा पञ्चमुहूर्तात्मा वा। अत्राश्वपतिकर्म तत्र पूर्वाह्ण-
व्यापिनी जस्मन्तभास्करे। अत्रैव वैष्णवाः शारद-
विष्णूत्सवमुदयव्यापिन्यां कुर्वन्ति। **निर्णयामृते**

अत्र रात्रौ शिवोमास्कन्दनिकुम्भपूजोक्ता दिवाभोजननिषेधश्चातो रात्रिव्यापिनी । अत्राश्विनीनक्षत्रयुक्तायां घृतपूर्णस्वर्णपात्रदानमुक्तं पूर्वाह्णगायां रामप्रकाशे । यद्दिने प्रदोषनिशीथव्यापिनी पूर्णिमा तद्दिन एव लक्ष्मीपूजा,उभयव्याप्तेः । पूर्वदिने निशीथव्यापिनी परदिने प्रदोषव्यापिनी तदा परा, त्रिसन्ध्यव्याप्तेः प्रदोषव्याप्तेश्च । पूर्वदिने निशीथे परदिने न प्रदोषे तदा पूर्वेति रामप्रकाशः ।

## कार्तिककृष्णपक्षीयप्रतिपदादितिथिनिर्णयः

प्र० १–इयं व्रतातिरिक्तोत्तरेति दीपिका ।

द्वि० २–अत्राप्यशून्यशयनव्रतमेतन्निर्णीतं श्रावणकृष्णद्वितीयायाम् ।

तृ० ३–अत्र बृहद्गौरीव्रतं चन्द्रोदयव्यापि व्रतार्के । उभयदिने तत्सत्त्वेऽसत्त्वे वोत्तरा ।

"रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम ।
अन्येषु व्रतकार्येषु गणयुक्ता प्रशस्यते ॥"

इति ब्रह्मवैवर्त्तात् । क्षये तु पूर्वा 'मुहूर्त्तमात्रसत्त्वेपि दिने गौरीव्रतं परे । परेह्नि नास्ति चेत्पूर्वविद्धापि' इत्यादिमाधवोक्तेः ।

च० ४–इयं करकचतुर्थी चन्द्रोदयव्यापिनी ग्राह्या । उभयदिने तत्त्वे पूर्वा निर्णयसिन्धौ । व्रतार्केऽप्येवम् ।

पं०५—अत्र पुत्रार्थिना श्राद्धं कार्यमिति जस्मन्तभास्करः ।

प०६—अत्रापि शुक्लपक्षस्थषष्ठीवत्पूजानिर्णयः ।

स०७—... ... ... ... ...

अ०८—इयमहोरा चन्द्रोदयव्यापिनी ग्राह्येति जस्मन्तभास्करे। अत्रैव कालाष्टमीव्रतं तच्च पूर्ववन्निर्णेयम्। अत्रैव व्रतार्केऽशोकव्रतमुक्तं हेमाद्रावादित्यपुराणे । अशोकापूजनोत्तरं—
"तस्मिन्नहनि यो भुङ्क्ते नक्तमिन्दुविवर्जितम् ।
भवत्यथ विशोका सा यत्र यत्राभिजायते॥"
इति । विशेषस्त्वत्राश्विनकृष्णाष्टम्यामुक्त एव। अत्रैव पूर्वाह्णे राधाकुण्डे स्नानमुक्तं जस्मन्तभास्करे ।

न०९—... ... ... ... ... ... ...

द०१०-... ... ... ... ... ... ...

ए०११-... ... ... ... ... ... ...

द्वा०१२-इयं गोवत्सद्वादशी गोधूलिव्यापिनी ग्राह्या ।
"गोधूलिकालसहिता पुत्रसौभाग्यदायिनी।"
इति।"गोधूलिं त्रिविधां वदंति मुनयो नारीविवाहादिके
हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे ॥
ग्रीष्मेऽर्द्धास्तमिते वसन्तसमये भानौ ततोऽस्पष्टतां
सूर्ये चास्तमुपागते च शुभदा वर्षाशरत्कालयोः॥"
इति ज्योतिषाद्गोधूलिरत्रास्तमयकालः।उभयदिने तत्त्वे

पूर्वविद्धा। युग्मवाक्यात्।"वत्सपूजा वटश्चैव कर्त्तव्या प्रथमेऽहनि"इति निर्णयामृतेऽभिधानाच्चेति माधवीय-निर्णयसिन्धुरामप्रकाशजस्मन्तभास्करभगवन्तभास्करप्रभृतिसर्वनिबन्धसिद्धान्तः । अत्र भोजनविशेषः—

"तद्दिने तैलपक्वं च स्थालीपक्वं युधिष्ठिर ।
गोक्षीरं गोघृतं चैव दधि तक्रं च वर्जयेत् ॥"

इति । नीराजनं चात्र ज्योतिर्निबन्धे आह ।

"आश्विने कृष्णपक्षे तु द्वादश्यादिषु पञ्चसु ।
तिथिपूक्तः पूर्वरात्रे नृणां नीराजनाविधिः ॥
नीराजयेयुर्देवांश्च विप्रान्गाश्च तुरङ्गमान् ।
ज्येष्ठाञ्छ्रेष्ठाञ्जघन्यांश्च मातृमुख्याश्च योषितः॥"

इति निर्णयसिन्धुजस्मन्तभास्करयोः ।

त्र०१३-"कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे ।
यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति ॥"

दीपदानमन्त्रश्च—

"मृत्युना पाशदण्डाभ्यां कालेन श्यामया सह ।
त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतामिति॥"

निर्णयसिन्धुनिर्णयामृतजस्मन्तभास्करस्थ-स्कान्दे । अतःप्रभृति शुक्लद्वितीयान्तं यमपञ्चकं तत्र यमुनायां तत्रापि मथुरायां स्नानदानयमतर्पणं निशा-

मुखे दीपदानश्चोक्तं कार्तिकमाहात्म्ये। तत्र जीवत्पितृकेण सव्येन तदितरेणापसव्येन तर्पणं कार्यम्। अत्र गोत्रिरात्रव्रतारम्भः कर्त्तव्य इति रामप्रकाशस्थहेमाद्रौ स्कांदे। अत आरभ्य दिनत्रयं प्रदोषे दीपदानम्।

च०१४-नरकचतुर्दशीयं चन्द्रोदयव्यापिनी ग्राह्येति व्रतार्कनिर्णयसिन्धुभगवन्तभास्करेषु। दिनद्वये पूर्वेति तिथिदर्पणपृथ्वीचन्द्रोदयस्मृतिदर्पणेषु। दिनद्वये तदभावेऽप्यरुणोदये सम्पूर्णे खण्डे वा दिनद्वये चतुर्दश्याः साम्ये च पूर्वदिन एवाभ्यङ्गं कुर्यात् 'पूर्वाविद्धचतुर्दश्याम्' इति वचनात्। पूर्वदिन एव सत्त्वे सैव ग्राह्या-दिनद्वयेऽसत्त्वेऽरुणोदयव्यापिनी ग्राह्या। 'पक्षे प्रत्यूषसमये' इत्युक्तेः। तदभावे तु चतुर्दशीह्रासे पूर्वेद्युः प्रदोषे पूर्वाह्णे त्रयोदशीमध्य एवाभ्यङ्गं कुर्यादिति दिवोदासः। परमत्र तैलाभ्यङ्गे चतुर्थयामगामिनी मुख्या।

"तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पुरा।
यामिन्याः पश्चिमे यामे तैलाभ्यंगो विशिष्यते॥"

इति रामप्रकाशे॥

"मृगाङ्कोदयवेलायां त्रयोदश्यां यदा भवेत्।
दर्शे च मङ्गलस्नानं दुःखशोकभयप्रदम्॥"

इति कालादर्शे त्रयोदशीनिषेधाच्च । अत्र चतुर्दशी-चतुर्थयामारुणोदयचन्द्रोदयानामुत्तरोत्तरस्य व्याप्यत्वाद्गुरुत्वमिति निर्णयसिन्धुः । अस्यामेव ब्रह्मविष्णुशिवादिप्रीतये तत्तत्स्थानेषु प्रदोषे दीपान्दद्यात् । दिनद्वये चन्द्रोदये चतुर्दश्यभावे त्रयोदश्यामेव चन्द्रोदये युक्तमिति व्रतार्कः । चन्द्रोदयानन्तरमभावे तत्रेति रामप्रकाशः । चतुर्दशीक्षयेऽपि पूर्वा । अत्र भौमवारचित्रासत्त्वे शिवपूजोक्ता दीपिकायाम् ।

अ०३०-अत्रापि प्रातरभ्यङ्गं कुर्यात् । 'भत्यूष' इत्यादि कालादर्शे।अत्रैव पुष्करपुराणे पञ्चत्वगुदकस्नानमुक्तम्। तथा च-

"स्वातिस्थिते रवाविन्दुर्यदि स्वातिगतो भवेत् ।
पञ्चत्वगुदकस्नायी कृताभ्यङ्गविधिर्नरः ॥
नीराजितो महालक्ष्मीमर्चयञ्छ्रियमश्नुते ॥"

अत्र बालवृद्धातुरान्विना दिवा भोजननिषेध उक्तो भविष्ये। 'दिवा तत्र न भोक्तव्यमि'त्यादिना।किञ्चात्र दधिक्षीरघृतादिभिः पार्वणश्राद्धमुक्तं दिवा प्रातर्वा अपराह्णे रामप्रकाशे।श्राद्धानन्तरमुल्काग्रहणमुक्तम्। उभयदिने प्रदोषव्याप्ता[illegible]ल्कादानं परदिने । अत्रैव प्रदोषे दीपदानं [illegible]क्ष्मीपूजा च-

"दीपान्दत्वा प्रदोषे तु लक्ष्मीं पूज्य यथाविधि ।
अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना ॥"
इति। दिनद्वये तत्र सत्त्वेऽसत्त्वे वा परेति जस्मन्तभास्करः।रामप्रकाशे तु दिनद्वयेप्रदोषव्याप्तिस्तदा परा।
"दण्डैकरजनीयोगे दर्शः स्यात्तु परेऽहनि ।
तदा विहाय पूर्वद्युः परेऽह्नि सुखरात्रिका॥"
इति । उभयदिनेऽपि न प्रदोषव्यापिनी तदा पूर्वा । 'अमावास्या यदा रात्रावि'त्यादिवाक्यात्।माधवीयेऽप्येवम् । निर्णयसिन्धावपि दिनद्वये सत्त्वे परा । दिवोदासीये प्रदोपस्य कर्मकालत्वात् ।
"अर्द्धरात्रे भ्रमत्येव लक्ष्मीराश्रयितुं गृहान् ।
अतः स्वलंकृता लिप्ता दीपैर्जाग्रज्जनोत्सवाः ॥
सुधाधवलिताःकार्याः पुष्पमालोपशोभिताः ॥"
इति ब्राह्मोक्तेश्च । प्रदोषार्द्धरात्रव्यापिनी मुख्या । एकैकव्याप्तौ परैव ।प्रदोपस्य मुख्यत्वादर्द्धरात्रेऽनुष्ठेयाभावाच्च । अत्रैवापररात्रेऽलक्ष्मीनिस्सारणमुक्तं मदनरत्ने भविष्ये—
"एवं गते निशीथे तु जने निद्रार्द्धलोचने ।
तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः ॥
निरसार्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् ॥"
इति । अत्र पापवारे आयुष्मति योगे स्वातिनक्षत्रे सन्यनिष्टावाप्तिः ।

"भानुभौमार्किवारे च कार्तिकेन्दुक्षयो भवेत् ।
आयुष्मान्स्वातिसंयुक्तो नृपनाशः पशुक्षयः ॥"
इति संग्रहोक्तेः। अत्र रामप्रकाशे कुबेरपूजनाद्युक्तं प्रदोषव्यापिन्याम् ।

## कार्तिकशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः।

प्र० १–अत्र गोक्रीडनमुक्तं निर्णयामृते । अस्यामेव रात्रौ बलिपूजोक्ता हेमाद्रौ भविष्ये–

"कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः ।
पूजां कुर्यान्नृपः साक्षाद्भूमौ मण्डलके शुभे ॥"
इत्यादि । तदेतत्पूर्वविद्धायां प्रकर्तव्यम्–
"पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ।"
इति हेमाद्रौ पाद्मोक्तेः । माधवीयेऽपि–
"बल्युत्सवं च पूर्वयुरुपवासवदाचरेत् ।"
इति । निर्णयामृतेऽपि–
"या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृपः ।
पूजनार्त्त्राणि वर्द्धन्ते प्रजा गावो महीपतिः ॥"
इति । तथा–
"भद्रायां गोकुलक्रीडा स्वदेशो वै विनश्यति ।
प्रतिपद्यग्निकरणं द्वितीयायां तु गोर्चनम् ॥
छत्रच्छेदं करिष्येते वित्तनाशं कुलक्षयम् ।"
इत्यादिदेवलवचनाच्च एते विधिप्रतिषेधाः पूर्वदिने प्रतिपदः सायाह्नव्यापित्वे द्वितीयदिने चन्द्रदर्शनसम्भवे च ज्ञेयाः ।

"गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः ।
सोमो राजा पशून्हन्ति सुरभीपूजकांस्तथा ॥"

इति पुराणसमुच्चयात्। द्वितीयदिने सायाह्नव्यापित्वे तु परैव ग्राह्या।

"वर्द्धमानतिथौ नन्दा यदा सार्द्धत्रियामिका ।
द्वितीया वृद्धिगामित्वादुत्तरा तत्र चोच्यते ॥"

इति। तथा—

"त्रियामगा दर्शतिथिर्भवेच्चेत्सार्द्धत्रियामाप्रतिपद्विवृद्धौ।
दीपोत्सवे ते मुनिभिःप्रदिष्टे अतोन्यथापूर्वयुते विधेये॥"

इति पुराणसमुच्चयादिति निर्णयामृतकारः। 'सार्द्धत्रियामिके' त्यनेन चन्द्रदर्शनाभाव उक्तः। द्वितीयायाः पञ्चधा विभक्तचतुर्थांशरूपापराह्णव्यापनेव चन्द्रदर्शनासंभवात्। रामप्रकाशस्तु दीपश्च उत्सवश्च दीपोत्सवं तस्मिन्निति अत्रोत्सवो बल्युत्सवः नतु गोक्रीडादिस्तत्र दीपविधौ त्रियामगा उत्सवविधौ च सार्द्धत्रियामा प्रतिपदित्याह, वयन्तु एतद्वचनद्वयं पूर्वविद्धासंभवे वेदितव्यमिति ब्रूमः। दिनद्वये प्रतिपदः सायाह्नव्याप्त्यभावे तु पूर्वैव। रात्रौ बलिपूजाविधानेन कर्मकालत्वात्, परादिने चन्द्रोदये च तन्निषेधादिति दिक्। मदनरत्ने तु प्रातर्घटिकामात्रघटीद्वयमिति प्रतिपत्सत्त्वे प्रातर्नारीनीराजनं सायं मङ्गलमालिका पूर्वविद्धायां च गोक्रीडेति। अत्राऽ

कूटसमर्पणमप्येतन्निर्णीततिथावेव कुर्वन्ति वैष्णवाः।
अत्रोदयव्यापिन्यां गोवर्द्धनपूजोक्ता निर्णयसिन्धौ
हेमाद्रौ स्कान्दे—
"प्रातर्गोवर्द्धनं पूज्य द्यूतं चापि समाचरेत्॥"
इति । जस्मन्तभास्करेऽप्येवम् ।

द्वि०२—यमद्वितीयाऽपराह्णव्यापिनी ग्राह्या—
"ऊर्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम् ।
स्नानं कृत्वा भानुजायां यमलोकं न पश्यति॥" इति
हेमाद्रौ स्कान्दे। अत्र मध्याह्ने यममर्चयेदिति पाठस्तु
बहुग्रन्थविसंवादादुपेक्ष्य इति। दिनद्वये तत्सत्त्वेऽसत्त्वे
वा पूर्वेति हेमाद्रिजस्मन्तभास्करनिर्णयसिन्धुषु
भविष्ये—
"प्रथमा श्रावणे मासि तथा भाद्रपदे परा ।
तृतीयाश्वयुजे मासि चतुर्थी कार्तिके भवेत॥
श्रावणे कलुषा नाम तथा भाद्रे च निर्मला ।
आश्विने प्रेतसञ्चारा कार्तिके याम्यका सिता॥"
इत्युक्त्वा प्रथमायां व्रतं द्वितीयायां सरस्वतीपूजा
तृतीयायां श्राद्धमुक्त्वा चतुर्थ्यामुक्तम् ।
"कार्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ।
यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः॥"
अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता ।
अस्यां निजगृहे विप्र न भोक्तव्यं ततो नरैः ॥

स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ।
दानानि च प्रदेयानि भगिनीभ्यो विधानतः ॥
स्वर्णालंकारवस्त्रान्नपूजासत्कारभोजनैः ।
सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः ॥
पितृव्यभगिनीहस्तात्प्रथमायां युधिष्ठिर ।
मातुलस्य सुताहस्ताद्द्वितीयायां तथा नृप ॥
पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् ।
चतुर्थ्यां सहजायाश्च भगिन्या हस्ततः परम् ॥
सर्वासु भगिनीहस्ताद्भोक्तव्यं बलवर्द्धनम् ॥"

इति। रामप्रकाशे तु इयं यमद्वितीया भ्रातृद्वितीया च । तत्र दिनद्वयेऽपराह्णसत्त्वे पूर्वा पूर्वाऽपरा परेति। अत्र भोजनमुख्यकालोऽष्टधाविभक्तदिनपञ्चमभाग इत्यपि तत्रैव। गौड निबन्धे तु कार्तिकसितद्वितीयायां यमुनयाऽपराह्णे यमोऽर्चितो भोजितश्चातस्तत्र भोजनस्य पूजाङ्गत्वेन पृथक्काभावादपराह्णः प्रतिपद्विद्धो मुख्यो 'द्वितीया प्रतिपद्युते'ति ब्रह्मवैवर्तादिति स्थितम्। गौडास्तु 'यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत्।' इत्याहुः। अर्घदानमंत्रः—

"एह्येहि मार्तण्डजपाशहस्तयमान्तकालोकधरामरेश।
भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते ॥"

इति।ज्येष्ठाग्रजानेति वदेदिति स्मार्त्ताः।प्रणाममन्त्रः—

"धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज।
पाहि मां किंकरैः सार्द्धं सूर्यपुत्र नमोस्तुते॥
यमस्वसर्नमस्तेऽस्तु यमुने लोकपूजिते।
वरदा भव मे नित्यं सूर्यपुत्रि नमोस्तु ते॥" इति।

तृ०३—... ... ... ... ...

च०४—नागचतुर्थीकालादर्शजस्मन्तभास्करे च परा। इय-मेव दूर्वाचतुर्थी मध्याह्नव्यापिनी। उभयदिने तत्त्वे दूर्वाचतुर्थी पूर्वा 'नागचतुर्थी परा' क्षये उभे अपि पूर्वे इति माधवः।

प०५—... ... ... ... ...

ष०६—स्वामिकार्त्तिकीयं पूर्वयुता व्रतार्कदीपिकामाधवी-येषु। कालस्तु आपाढशुक्लपष्ठयुक्तस्कन्दव्रते उक्तो द्रष्टव्यः।

स०७—इयं कल्पादिः पूर्वाह्णव्यापिनी।

अ०८—इयं गोपाष्टमी उदयव्यापिनी परेति जस्मन्तभा-स्करः। नवमीयुता कर्त्तव्या सामान्यनिर्णयोक्त-युग्मादिति रामप्रकाशः।

न०९—इयं युगादिः पूर्वाह्णव्यापिनी जस्मन्तभास्करे। निर्णयसिन्धावप्येवम्। इयमेवाक्षयनवमी उदय-व्यापिनी क्षये वृद्धौ च पूर्वा। अत्रैव विष्णुव्रतं त्रि-रात्रमुक्तं हेमाद्रौ पाद्मे 'कार्तिके शुक्लनवमीमथवा-

प्ये' त्यादिना।सौवर्णहरिणा तुलस्या विवाहं कुर्यात्-
इत्युक्तम्। रामप्रकाशेऽप्येवमुदयव्यापिनी।
"युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता॥"
इति।

८०१८-अत्र रामप्रकाशस्थवराहपुराणे सार्वभौमव्रतमुक्तम्। तत्र दशदिक्षु बलिदानमर्द्धरात्रे भोजनमिति।

९०११-अत्र भीष्मपञ्चकव्रतमुक्तंनिर्णयसिन्धुस्थनारदीये-
"अतो नरैःप्रयत्नेन कर्त्तव्यं भीष्मपञ्चकम्"
इत्याद्युक्तेः। इयमेव देवबोधिनी रात्रिव्यापिनी
निर्णयसिन्धुजस्मन्तभास्करयोः पाद्मे—
"एकादश्यां तु शुक्लायां कार्तिके मासि केशवम्।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमायुतः॥"
इति।एकादश्याःक्षये वृद्धौ च पूर्वा मन्त्रे रात्रिपदोपादानादुत्तरदिने रात्रौ तदभावात्।अत्र वैष्णवानां क्षये द्वादश्यामुपवासो वृद्धौ चोत्तरेद्युः।यच्च रामार्चनचन्द्रिकादिषु द्वादश्यां देवबोधनम्, यच्च 'निद्रां त्यजति कार्तिक्यामि'ति यमवचनेन पूर्णिमायामुक्तं, तद्देशाचाराद्व्यवस्थाप्यम्। तद्विधिश्च—
"तत्रैव देवदेवस्य स्नानं पूर्वं महद्भवेत्।
महापूजां ततः कृत्वा देवमुत्थापयेत्सुधीः॥"
मन्त्रास्तु वाराहपुराणे उक्ताः 'ब्रह्मेन्द्रे'त्यादि।

"उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।
त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदम् ॥"
इत्यादयः । द्विजानां तु 'इदं विष्णुर्विचक्रमे' इत्यादि-मन्त्रः । एवं देवमुत्थाप्य चातुर्मास्यव्रतसमाप्तिं कुर्यात् । भारते तु द्वादश्यां समाप्तिरुक्ता ।

द्वा० १२-अत्र नीराजनद्वादशीव्रतमुक्तं प्रतापमार्त्तण्डे—
"कार्तिके शुक्लपक्षस्य द्वादश्यां रजनीमुखे ।
सुप्तोत्थिते जगन्नाथे स्नात्वा शुक्लाम्बरः शुचिः ॥
जनयित्वा नवं वह्निं हुत्वा मन्त्रैर्द्विजोत्तमैः॥" ।
विष्णुं संपूज्य लक्ष्म्यादिदेवतानां नीराजनं विधाय गोतुरङ्गादीनाञ्च ततःकुलाङ्गना वेश्या वा सिंहासनोपविष्टनृपं नीराजयेयुः।ततः सैन्यनीराजनं तच्चारोग्यदीर्घायुःपुष्ट्यादिफलकम् । अत्रैव वैष्णवैर्विष्णुदेवालये ध्वजारोपणं कार्यम् । इयं मन्वादिः पूर्वाह्णव्यापिनीति निर्णयसिन्धुजस्मन्तभास्करयोः।अत्रैव रेवतीनक्षत्रयोगरहितायां पारणं कार्यं यदा रेवतीयोगरहिता द्वादशी सर्वथा न लभ्यते तदा रेवत्याश्चतुर्थपादं वर्जयेदिति निर्णयसिन्धौ । अत्र निर्णयामृते योगेश्वरव्रतमुक्तं तत्रैकादश्यां व्रतं द्वादश्यां दानम् ।

त्र० १३-... ... ... ... ...

च० १४-वैकुण्ठचतुर्दशीयं विष्णुपूजायां रात्रिव्यापिनी निर्णयसिन्धुरामप्रकाशस्थहेमाद्रौ भविष्ये—

"कार्तिकस्य सिते पक्षे चतुर्दश्यां नराधिप ।
सोपवासस्तु संपूज्य हरिं रात्रौ जितेन्द्रियः॥"

इति । दिनद्वये तत्र सत्त्वे परा सामान्यनिर्णयात् । 'दिवारात्रि व्रतं यच्चे'त्याद्युक्तेश्चेति जस्मन्तभास्करे। शेषं समानम्।अत्रैवारुणोदये विश्वेश्वरपूजनमुत्तरवाहिनीगङ्गास्नानादिमहिमा चोक्तःनिर्णयसिन्धुभगवन्तभास्करजस्मन्तभास्करस्थत्रिस्थलीसेतौ सनत्कुमारसंहितायाम्—

"वर्षे च हेमलम्बाख्ये मासि श्रीमति कार्तिके ।
शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति ॥
महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके ।
स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत्॥"

इति । तत्पूर्वदिने चोपवासः । अत्र देव्येति सहार्थे तृतीया।अस्यार्थः । विश्वेश्वरोऽत्रारुणोदये मणिकर्णिकायांस्नात्वा स्वनामकं लिङ्गं स्थाप्यापूजयदिति।अत्र काशीखण्डे—

"कार्तिकस्य चतुर्दश्यां विश्वेशं यो विलोकयेत् ।
स्नात्वा चोत्तरवाहिन्यां न तस्य पुनरागतिः॥"

इति।फलमुक्तम्। दिनद्वयेऽरुणोदये पूर्वा जस्मन्तभा-

स्करे'रुद्रव्रतेष्वि'त्यादिवचनात्।उभयदिनेतथा प्राप्तौ संपूर्णत्वात्परेति रामप्रकाशः । अत्र कार्तिकव्रतो-द्यापनमपि पाद्मे । रामप्रकाशे निर्णयामृते चेयं पाषाणचतुर्दशी नक्तमत्र देवीपूजोक्ता ब्रह्मकूर्चव्रतञ्च ।

पू० १५-इयं परा'अमापौर्णमास्यौ परे'इति कालनिर्णयोक्तेः।

अत्र विशेषो हेमाद्रौ ब्राह्मे—

"पुण्या महाकार्तिकी स्याज्जीवेन्द्वोः कृत्तिकासु च ।"

किंच—

"प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।
सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा॥"

इति । पाद्मे—

"विशाखासु यदा भानुःकृत्तिकासु च चन्द्रमाः ।
स योगः पद्मको नाम पुष्करेष्वतिदुर्लभः ॥
पद्मकं पुष्करे प्राप्य कपिलां यः प्रयच्छति ।
स हित्वा सर्वपापानि वैष्णवं लभते पदम्॥"

इत्यादि । अत्रैव सायंकाले मत्स्यावतारो जात इत्युक्तं पाद्मे कार्तिकमाहात्म्ये । अत्रैव सन्ध्यायां त्रिपुरो-त्सव उक्तो भार्गवार्चनदीपिकायाम् ।

"पौर्णमास्यां तु सन्ध्यायां कर्तव्यस्त्रिपुरोत्सवः।"

इति ।दीपदानञ्च सुरालये तद्दर्शनाज्जीवमात्रस्य मुक्ति-रिति च । अत्र वृषोत्सर्गोतिप्रशस्तः । तदुक्तं मात्स्ये—

"कार्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् ।
शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम्॥"

इति । अत्रैव कार्तिकेयदर्शनमुक्तं काशीखण्डे—
"कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥"
इति । इयं मन्वादिः पूर्वाह्णव्यापिनी ॥

## मार्गकृष्णपक्षीयप्रतिपदादितिथिनिर्णयः ।

प्र० १—अत्रोदये रोहिणीनक्षत्रयोगे स्नानेनानेकशतसूर्यग्रहणस्नानजसमं फलमुक्तं रामप्रकाशे । गौडनिबन्धीयभविष्ये—
"रोहिण्या प्रतिपद्युक्ता मार्गे मासि सितेतरा ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा ॥"
इति । उभयपक्षीयोदयगामिप्रतिपदि पूर्वाह्ण एव व्रतदानादिकार्यमुपवासातिरिक्तमुपवासस्य पूर्वविद्धाविधानात् ।

द्वि० २—... ... ... ... ...

तृ० ३—अत्र सौभाग्यसुन्दरीव्रतं चतुर्थीयुतायां युग्मवाक्यादिति व्रतार्के । क्षये पूर्वेति माधवीये ।

चतुर्थी४—..........................................

पञ्चमी५—..........................................

षष्ठी६—..........................................

सप्तमी७—..........................................

अ०८–अत्र कालाष्टमीव्रतमुक्तं जस्मन्तभास्करस्थका-शीखण्डे। तत्र रात्रिव्यापिनी ग्राह्या। दिनद्वये तत्र सत्त्वे पूर्वेति रुद्रव्रतेष्वित्याद्युक्तेरुत्तरेति केचित्। प्रदोषे भैरवोत्पत्तेः।क्षये पूर्वैव।निर्णयसिन्धौ तु मध्या-ह्नव्यापिनी। शिवरहस्ये मध्याह्ने भैरवोत्पत्तेः श्रव-णात्। तथा च तत्रैव नित्ययात्रादिकं कृत्वा 'मध्या-ह्ने संस्थिते रवौ' इत्युपक्रम्य ब्रह्मणा रुद्रेऽवज्ञाते उक्तं

"तदोग्ररूपादनवद्यान्मत्तः श्रीकालभैरवः।
आविरासीत्तदा लोकान्भीषयन्नखिलानपि॥"

इति। अत्रोपवास एव प्रधानमित्युक्तं तत्रैव–

"उपोषणस्याङ्गभूतमर्घ्यदानमिह स्मृतम्।
तथा जागरणं रात्रौ पूजा यामचतुष्टये॥"

इति। सन्ध्यायामपि पूजोक्ता। पारणा तु प्रातरेव 'यामत्रयोर्ध्वगामिन्यामि'त्याद्युक्तेः। दिनद्वयेंऽशतः संपूर्णायां तद्यामो पूर्ववोक्तवचनात्। अत्रैव काल-तीर्थादिकस्नानतर्पणोत्तरं कालभैरवदर्शनं पूर्वाह्णे। अत्र रामप्रकाशे रुक्मिण्यष्टमीव्रतमुक्तं सप्तवर्षपर्यन्तम्। तत्र चन्द्रोदयव्यापिनी ग्राह्या।

न०९–... ... ... ... ...
द०१०–... ... ... ... ...
ए०११–... ... ... ... ...

द्वा० १२-... ... ... ... ...
त्र० १३-... ... ... ... ...
च० १४-... ... ... ... ...
अ० ३०-अत्र गौरीतपोव्रतं व्रतार्केऽङ्गिरसोक्तम्। तत्र मध्याह्नः पूजोपक्रमकालः। सायंकालो मुख्यः। अत्राष्टादशघटिका चतुर्दशी चेत्तदा 'भूतोष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम्' इति माधवोक्तेःपरा। क्षये वृद्धौ च पूर्वा उभयकालसत्त्वात्।

## मार्गशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः।

प्र० १-अत्र रुद्रपूजोपवासौ पूर्वविद्धायां प्रदोषव्यापिन्यां माधवीये उक्तौ। अत्रैव धान्यव्रतमपि।अत्र विष्णुपूजनादि चोदयव्यापिन्याम्।अत्र प्रदोषोऽर्कास्तादुपरि घटित्रयात्मकोऽर्द्धयामो वा गृहस्थस्य। यतिविधवयोस्तु मुहूर्तात्मं दिनं प्रदोषः। उभयदिने तत्सत्त्वेऽसत्त्वे वा परेति माधवः।
द्वि० २-अत्रोदयव्यापिन्यां सुवर्णदर्शनम्।
तृ० ३-भविष्ये रम्भाख्येयं पूर्ववन्निर्णयोऽस्याः।
च० ४-अत्र वर्षचतुष्टयसाध्यं वरदचतुर्थ्याख्यं गणेशव्रतमुक्तं निर्णयामृते नक्तम्।
पं० ५-इयमपि नागपञ्चमी—
"शुक्ले मार्गशिरे पुण्या श्रावणे या च पञ्चमी।

स्नानदानैर्बहुफला नागलोकप्रदायिनी॥"

इति हेमाद्रौ स्कान्दात् । इयं नागपूजायां षष्ठी-युता ग्राह्या।

"पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता ।
तस्यां तु तुषिता नागा इतरा सचतुर्थिका॥"

इति मदनरत्नवचनादिति निर्णयसिन्धुजस्मन्त-भास्करमाधवीयदीपिकाः।उपवासे तु पूर्वेति श्रावण-शुक्लपञ्चमीनिर्णये जस्मन्तभास्करे उक्तम् ।

५०६—अत्र स्कन्दपूजोक्तामध्याह्ने।तद्व्रते तु सायाह्नव्यापिनी। प्रतापमार्तण्डे उभयदिने तत्त्वे पूर्वविद्धा 'कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी। एताः पूर्वयुताः कार्या' इति।माधवीयेऽप्येवम्।दीपिकाव्रतार्कयोरप्येवम्। निर्णयसिन्धुस्थदिवोदासस्तु परेह्नि रात्रावाद्य-याममध्ये पारणसम्भवे इदमन्यथोत्तरेति। इदमब्दपर्य-न्तं षष्ठीषु कार्यम्।इयं चम्पाषष्ठीति महाराष्ट्रेषु प्रसिद्धा सोत्तरायुता ग्राह्या 'षण्मुन्योरि' ति युग्मवाक्यात् । 'पूर्वाह्णे दैविकं कुर्यादि'ति वचनादस्य च देवकर्मत्वात्। अस्यां योगविशेष उक्तो ब्रह्माण्डपुराणे मल्लारि-माहात्म्ये—

"मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता।
रविवारेण संयुक्ता चम्पेतीह प्रकीर्तिता ॥

विशाखाभौमयोगेन सा चम्पेतीह विश्रुता॥"

इति मदनरत्ने पाठः।

"मार्गशीर्षेऽमले पक्षे षष्ठ्यां वारेंशुमालिनः।

शततारागते चन्द्रे लिंगं स्याद्दृष्टिगोचरम्॥" इति।

इयं योगवशात्पूर्वा परा वेति निर्णयसिन्धुः। सप्तमीयुतेति दिवोदासः। तदभावे तु सप्तमीयुतेति जस्मन्तभास्करः। रविवारशततारायभाव इत्यभावार्थः।

स०७–इयं मित्रसप्तमी पूर्वाह्णव्यापिनी। उभयत्र तत्त्वे पूर्वयुता दीपिकामाधवीयजस्मन्तभास्करेषु।

अ०८–अत्र रामप्रकाशस्थब्रह्मपुराणे मल्लारिरूपमहादेवपूजोक्ता। अत्र वैधृतिरविवारयोगेऽतिप्राशस्त्यम्। एषा पूर्वा।

"रुद्रव्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिः।"

इति वचनात्।

न०९–इयं नन्दिनीनाम्न्युक्ता निर्णयामृते। अत्र देवी पूजा व्रतं त्रिरात्रं भविष्योत्तरे। रामप्रकाशेप्येवम्।

द०१०-... ... ... ... ...

ए०११-... ... ... ... ...

द्वा०१२-अत्र निर्णयाऽमृते धरणीव्रतमुक्तं तच्चाहोरात्रसाध्यम्।

त्र०१३-इयमनङ्गत्रयोदशी। पुरा शम्भुना कामेन कृता। अत्र-

"अनङ्गो भगवान्विष्णुस्तेजोमूर्तिरगोचरः।

स एव देवो येनास्यास्तेनानङ्गत्रयोदशी ॥"

इति। तत्र नद्यादौ स्नानं विधाय महादेवलिङ्गं पूजयेत्। ततो होमस्ततो मधुमत्या सहितमनङ्गं पूजयेत्। ततो मधुमाशनमित्यादि वर्षपर्यंतं व्रतं कार्यं वर्षान्ते उद्यापनमुमामहेश्वरप्रतिमादानञ्च। अत्र यमादर्शनव्रतं तत्र सूर्योपासकान्पञ्चाष्टौ वा द्विजान् यमनाम्ना तिलतैलेनाभ्यज्य स्नापयेत् ततस्तान्प्राङ्मुखानुपवेश्य गुडापूपादिपक्वान्नं भोजयेत् ततस्ताम्रपात्रस्थसुवर्णार्कप्रतिमाच्छत्रादिकं तेभ्यो यमकिङ्करनाम्ना दद्यात् । अत्रैकभक्तं नक्तमुपवासो वा तत्रैकभक्ते मध्याह्नः नक्ते प्रदोषः उपवासेऽहोरात्रः पूजने पूर्वाह्णः कालः। एतद्व्रतफलं विष्णुलोकप्राप्तिः ।अत्र व्रतविशेषयोगविशेषेण कर्त्तव्यतोक्ता पद्मपुराणे ।

"यदा त्रयोदशी शुक्ला मन्दवारेण संयुता।
आरब्धव्यं व्रतं तत्र संतानफलसिद्धये ॥
ऋणनिर्मोचनार्थं तु भौमवारेण संयुता ।
सौभाग्यश्रीसमृद्ध्यर्थं शुक्रवारेण संयुता ॥
आयुरारोग्यसिद्ध्यर्थं भानुवारेण संयुता ।
शनिसोमविशेषेण परा ग्राह्या त्रयोदशी ॥
अन्यथा तु प्रकर्त्तव्या पूर्वविद्धा सदा नरैः॥"

इति। निर्णयामृतदीपिकाजयन्तभास्कररामप्र-

काशेषु पूर्वविद्धा प्रदोषव्यापिनी। माधवीये त्वपराह्णव्यापिनी परा च। अत्र विष्णुपूजा च पूर्वाह्णे। मत्स्यपुराणे तु सर्वमासीयपक्षद्वयगतासु त्रयोदशीषु कामपूजा विष्णुयात्रोत्सव उक्तो मध्याह्ने।

च०१४-अत्र कपर्दीश्वरसन्निधौ स्नानात्पैशाच्यहानिः। सांवत्सरी तयात्रातस्तीर्थप्रतिग्रहजपापहानिस्तत्र परा कुलधर्मव्रतादावपीति माधवीयजस्मन्तभास्करनिर्णयसिन्धुषु। अत्र निर्णयसिन्धुस्थत्रिस्थलीसेतौ पिशाचमोचनतीर्थे श्राद्धमुक्तं तत्र तस्य प्राप्तपैशाच्यस्वपित्राद्युद्देश्यकत्वे पार्वणत्वादपराह्णव्यापिनी ग्राह्या। अज्ञातनामपिशाचाद्युद्देश्यत्वे त्वेकोद्दिष्टत्वान्मध्याह्नव्यापिनी ग्राह्या। अत्र रामप्रकाशे उपवासः शिवपूजा स्वर्णवृषदानाद्युक्तं पूर्वाह्णव्यापिन्याम्।

पू०१५-अत्र दत्तात्रेयोत्पत्तिस्तत्र'प्रदोषव्यापिनीति वृद्धा'इति निर्णयसिन्धुजस्मन्तभास्करयोः। अत्र कुसुम्भरक्तवस्त्रच्छन्नकांस्यपात्रस्थसौवर्णचन्द्रप्रतिमादानं सैन्धवलवणदानं चोक्तं जस्मन्तभास्करे विष्णुधर्म्मोत्तरे। अत्र चन्द्रपूजा चन्द्रोदये ससुवर्णलवणदानञ्चोक्तं रामप्रकाशे। इयं मृगशिरोनक्षत्रयुक्ताऽतिप्रशस्ता।

# पौषकृष्णपक्षीयप्रतिपदादितिथिनिर्णयः ।

प्र० १—... ... ... ... ...

द्वि० २—... ... ... ... ...

तृ० ३—... ... ... ... ...

च० ४—... ... ... ... ...

पं० ५—... ... ... ... ...

ष० ६—... ... ... ... ...

स० ७—... ... ... ... ...

अ० ८—... ... ... ... ...

न० ९—... ... ... ... ...

द० १०-... ... ... ... ...

ए० ११-... ... ... ... ...

द्वा० १२-अत्र सुरूपाद्वादशीव्रतं[1] गुर्जरप्रसिद्धं व्रतार्के । तच्च रात्रिव्यापि । पुष्यनक्षत्रयोगे पूर्वा परा वा ।

त्र० १३-... ... ... ... ...

च० १४-... ... ... ... ...

अ० ३०-इयं कुहूः ।

---

१ 'स्वरूपाद्वादशीव्रतम्' इति पाठांतरम् ।

## पौषशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः ।

प्रतिपदा १—... ... ... ... ...

द्वि० २- अत्र दर्पणदर्शनमुदयव्यापिन्याम् ।

तृ० ३—... ... ... ... ...

च० ४—... ... ... ... ...

पं० ५—... ... ... ... ...

ष० ६—... ... ... ... ...

स० ७—... ... ... ... ...

अ० ८—इयं बुधवारयोगान्महाभद्रोक्ता जस्मन्तभास्करे भविष्योत्तरे—

"पौषे मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् ।
तदा तु सा महापुण्या महाभद्रेति कीर्तिता ॥
तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् ।
मत्प्रीतये कृतं देवि शतसाहस्रिकं भवेत् ॥"

इति। भरणीनक्षत्रयोगे त्वतिप्रशस्तेति निर्णयामृतादौ स्थितम् । अत्र निर्णयसिन्धौ कल्पतरौ भविष्ये रोहिण्यार्द्रायोगे पुण्यतमत्वमुक्तम् । रोहिण्यार्द्रायोग इत्यस्यायमर्थः रोहिण्यार्द्रयोरुभयोरपि तत्र सत्त्वे न त्वेकैकस्या योगे इति । रामप्रकाशेऽप्येवम् ।

न० ९—... ... ... ... ...

द० १०-... ... ... ... ...

ए० ११-इयं मन्वादिः पूर्वाह्णव्यापिनी। अतो माघस्नानारम्भः केषांचिन्मतेन।

द्वा० १२-निर्णयामृतेऽत्र कूर्मद्वादशीव्रतमुक्तम्। तत्रैकादश्यां रात्रौ होमपूजनादि द्वादश्यां प्रतिमादानम्। रामप्रकाशेऽप्येवम्। अन्येषां मतेनातो माघस्नानारम्भः।

त्र० १३-... ... ... ... ...

च० १४-... ... ... ... ...

पू० १५-अतो माघस्नानारम्भः। स्नानमरुणोदये प्रयागेऽतिपुण्यं काश्युद्भवे प्रयागेऽपि समुद्रेऽपीति पृथ्वीचन्द्रोदये। निर्णयामृतेऽत्र पुष्यनक्षत्रयुक्तायामलक्ष्मीनाशाय स्नानं हरिशक्रसोमपुष्यबृहस्पतिपूजनं होमदानादि चोक्तम्। रामप्रकाशेऽप्येवम्। अत्र राजाभिषेकश्च।

## माघकृष्णपक्षीयप्रतिपदादितिथिनिर्णयः।

प्र० १-अतः प्रभृति माघे मूलकभक्षणं न कार्यम्।

द्वि० २-... ... ... ... ...

तृ० ३-अत्र सौभाग्यसुन्दरीव्रतमुक्तं व्रतार्के। तच्च युग्मवाक्याच्चतुर्थीयुतायां कार्यम्। माधवेन तु क्षये पूर्वेत्युक्तम्।

च० ४-इयं गौरीचतुर्थी व्रतार्के पूर्वविद्धा 'गौर्यां चतुर्थी वत्सेनुपूजे' त्यादिवचनात्। भगवन्तभास्करे

प्रदोषव्यापिनी । गणेशव्रते मध्याह्नव्यापिनी ग्राह्या । उभयदिने तत्सत्त्वे पूर्वा । उत्तरदिन एव मध्याह्नव्यापित्वे परा । उभयसत्त्वे पूर्वेति माधवः । निर्णयसिन्धावप्येवम् । अत्र संकष्टनाशनव्रतं तत्र चन्द्रोदयव्यापिनी।'चन्द्रायार्घं निवेदयेदि'ति संकष्टचतुर्थीकथास्थनारदीयोक्तेः । उभयदिने चतुर्थ्यां चन्द्रोदयसत्त्वेऽसत्त्वे च पूर्वा 'हेरम्बान्यचतुर्थिका परयुता' इति कालनिर्णयोक्तेः। 'मातृविद्धो गणेश्वर'इत्यादिवचनाच्च । व्रतार्केऽप्येवम्।

पं०८–... ... ... ... ...
प०६–... ... ... ... ...
स०७–... ... ... ... ...
अ०८–... ... ... ... ...
न०९–... ... ... ... ...
द०१०-... ... ... ... ...
ए०११-... ... ... ... ...

द्वा०१२-इयं तिलद्वादशी पूर्वाह्णव्यापिनी ग्राह्या। अत्र तिलोत्पत्तिर्जाताऽतः–

"तिलैस्तैलेन दीपाश्च देया देवगृहेषु च ।
निवेदयेत्तिलान्नैव होतव्याश्च तथा तिलाः ॥
तिलान्दत्वा च विप्रेभ्यो भक्षयेच्च तिलांस्तथा ॥"
इति ।

त्र०१३-··· ··· ··· ··· ···

च०१४-अत्र यमतर्पणमुक्तमर्कोदयात्पूर्वं हेमाद्रिनिर्णयसिन्धुजस्मन्तभास्करेषु।

अ०३०-मौनेयमुदयव्यापिनी। अत्र सति सम्भवेऽर्द्धोदयो योगविशेषो मदनरत्ने भारते—

"अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः।
अर्द्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः॥"

इति।

"दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन।"

इति। निर्णयामृतजस्मन्तभास्करयोरप्येवम्। हेमाद्रिनिर्णयसिन्धुप्रभृतिभिस्तु इदमर्द्धमन्यनिबन्धेष्वभावान्निर्णयामृतमात्रोक्तेर्निर्मूलमेवेत्युक्तम्। तेन हेमाद्र्यादिमते तु रात्रावप्यर्द्धोदयो भवति। केचित्तु 'किञ्चिन्न्यूनो महोदयः' इत्याहुस्तदपि निर्मूलम्। निबन्धेष्वदर्शनात्। अत्र ब्रह्मविष्णुशिवप्रतिमापूजनदानं तिलपर्वततिलपात्रसोपस्करशय्यात्रयदानं स्वर्णधेनुदानमशक्तस्य तिलधेनुदानञ्च जस्मन्तभास्करे। अत्र पायसपूर्णसुवर्णपात्रदानमप्युक्तं व्रतार्के स्कान्दे। अत्रार्द्धोदयव्रतमुक्तं तत्कालस्त्वर्द्धोदययोग सम्भवकाल एव। अत्राऽमावृद्धावुत्तरदिनेऽर्कपात श्रवणसत्त्वे स्नानदानादि कार्यम्।

"तिथीनामन्तिमो भागः स्थितिकर्म्मसुपूजितः।"

इति माधवीयस्मृतेः।

"मुहूर्तमात्रामावास्या प्रतिपद्यपि चेद्भवेत् ।
तद्दत्तमक्षयं ज्ञेयं पर्वशेषं तु पर्ववत् ॥"
इति जस्मन्त–भास्करस्थहरिहरभविष्योक्तेश्च।

## माघशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः।

प्र० १–... ... ... ... ...

द्वि० २–अत्र भूमिजलदर्शनमुदयव्यापिन्याम् ।

तृ० ३–गुडलवणयोर्दानं पूर्वाह्णव्यापिन्यामुक्तं दीपिकाजस्मन्तभास्करयोः। 'माघे शुक्लतृतीयायां गुडस्य लवणस्य च' त्यादिभविष्योक्तेः । इयं बुधश्रवणयोगेऽतिपुण्या दीपिकायाम्। अत्र रामप्रकाशस्थभविष्योत्तरे गौरीव्रतमुक्तम् । तत्कालस्तु भाद्रशुक्लतृतीयायां निर्णीतः ।

च० ४–इयं कुन्दचतुर्थी प्रदोषव्यापिनी ।
"माघशुक्लचतुर्थ्यान्तु कुन्दपुष्पैःसदाशिवम् ।
संपूज्य यो हि नक्ताशी स प्राप्नोति श्रियं नरः ॥"
इति निर्णयसिन्धौ कालादर्शे कौर्मात् । उभयदिने तत्त्वे परेति हेमाद्रिमाधवौ । इयमेव गौरीचतुर्थ्यपि प्रदोषव्यापिनी ।
"माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः ।
ये त्वां दुण्ढेऽर्चयिष्यन्ति तेऽर्च्याः स्युर्गुरुद्रुहाम् ॥"
इति निर्णयसिन्धुजस्मन्तभास्करयोःस्कान्दात्।

'माघमास'इत्यादित्रिस्थलीसेतौ लैङ्गाच्च।उभयदिने तत्त्वे पूर्वविद्धा तिथिदर्पणभगवन्तभास्करमाधवीयेषु। व्रतार्कजस्मन्तभास्करस्थकाशीखण्डे ऽत्र तिलचतुर्थीव्रतमुक्तं नक्तव्यापिन्याम् 'विधाय वार्षिकीं यात्रामि'त्यारभ्य 'नक्तव्रतपरायण' इत्यन्तेन। दिनद्वये सत्त्वेऽसत्त्वे वा पूर्वा 'मातृविद्धो गणेश्वर' इति जस्मन्तभास्करः। उभयदिने सत्त्वेऽसत्त्वे वा गौरीव्रते पूर्वा शिवव्रते उत्तरेति माधवमतं युक्तम्। अत्रोदयव्यापिन्यां भौमवारयोगे स्नानादेरतिप्राशस्त्यम्।

पं०८५–इयं श्रीपञ्चमी पूर्वाह्णव्यापिनी।तदुक्तं निर्णयसिन्धुजस्मन्तभास्करस्थवाराहे–

माघशुक्लचतुर्थ्यां तु वरमाराध्य च श्रियः।
पञ्चम्यां कुन्दकुसुमैः पूजां कुर्यात्समृद्धये ॥"

इति। दिनद्वये पूर्वाह्णव्यापित्वे 'कृष्णा पूर्वयुता सिता परयुता स्यात्पञ्चमीति स्थितिः' इत्यादिकालनिर्णयोक्तेः। हेमाद्रिमतेप्येवम्। उभयदिने तत्त्वे पूर्वा युग्मवाक्यादिति माधवजस्मन्तभास्करनिर्णयामृतेषु। इयं चैत्रशुक्लपक्षे इति दिवोदासः। इयं वसन्तपञ्चम्यपि।अत्र रतिकामयोः पूजा श्रीपञ्चमीवत्कालः।

प०८६–... ... ... ... ...

अ०७-माघशुक्लसप्तमी रथसप्तमी साअरुणोदयव्यापिनीग्राह्या।

"सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥"
इति चन्द्रिकायां विष्णूक्तेः ।
"अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
प्रयागे यदि लभ्येत कोटिसूर्यग्रहैः समा ॥"
इति संग्रहोक्तेश्चेति निर्णयसिन्धुजस्मन्तभास्करयोः।दिनद्वयेऽरुणोदये सत्त्वेऽसत्त्वे वा पूर्वा सामान्यनिर्णयात् ।
"अचला सप्तमी दुर्गा शिवरात्रिर्महत्तरा ।
द्वादशी वत्सपूजायां सुखदा प्राग्युता सदा॥"
इति दिवोदासवचनाच्चेति जस्मन्तभास्करः ।
निर्णयसिन्धौ तु यत्पष्ठीयुतत्वमुक्तं तयदा पूर्वेह्नि घटिकाद्वया षष्ठी सप्तमी च परेद्युः क्षयवशादरुणोदयात्पूर्वं समाप्यते तत्परं ज्ञेयम् । तत्र षष्ठ्यां सप्तमीक्षयं प्रवेश्यारुणोदये स्नानं कार्यमिति । मदनरत्नव्रतार्कयोरप्येवम् । तद्विधिर्हेमाद्रौ भविष्ये—
"कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम् ।
रात्र्यन्ते चालयेथास्त्वं दत्वा शिरसि दीपकम्॥"
इति । तथा जलं प्रकम्प्य ।
"न केन चाल्यते यावत्तावत्स्नानं समाचरेत् ।
सौवर्णे राजते ताम्रे पात्रेऽलाबुमयेऽथवा ॥

तैलेन वर्तिर्दातव्या महारजनरञ्जिता ॥"
महारजनं कुसुम्भम्।
"समाहितमना भूत्वा दत्त्वा शिरसि दीपकम्।
भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत् ॥"
"नमस्ते रुद्ररूपाये" त्यादि मन्त्रत्रयं स्नानमन्त्रत्रयञ्च
तत्रैव। अर्घ्यदाने विशेष उक्तः सौरागमे—
"अर्कपत्रैः सबदरैर्दूर्वाक्षतसचन्दनैः।
अष्टाङ्गविधिना चार्घ्यं दद्यादादित्यतुष्टये ॥"
इति। अत्र गुडघृतकाञ्चनसहितदीपतिलदानमपि। अत्र
काशीखण्डे विशेषान्तरम्।
"लोलार्के रथसप्तम्यां स्नात्वा गङ्गासिसङ्गमे।
सप्तजन्मकृतैः पापैर्मुक्तो भवति तत्क्षणात् ॥" इति।
अत्र गर्गेण पद्मको योग उक्तः। तथा च—
"षष्ठी च सप्तमीयोगे वारश्चेदंशुमालिनः।
योगोयं पद्मको नाम सहस्रार्कग्रहैः समः ॥"
तथा।
"रविवारेण शुक्लायां सप्तम्यामुत्तरायणे।
पुन्नामधेयनक्षत्रे पूजयेच्च दिवाकरम् ॥"
इति। पुन्नामधेयनक्षत्राणि हस्तानुराधापुष्यमृगपुनर्वस्वश्वि-
नीसार्द्रपदानामानि। अत्र रविरथयात्रां कृत्वा सरथं
रविं विप्राय दद्यात्। तथा च भविष्ये।
"एवंविधं रथवरं रविवाजियुक्तं
हैमं च हेमशतशोभितेना समेतम्।

दयाच्च माघसितसप्तमिवासरे यः
सोऽसङ्गचक्रगतिरेव महीं भुनक्ति॥"

इति निर्णयसिन्धुजस्मन्तभास्करयोः। अत्र जस्मन्तभास्करमतं युक्तम्। युग्मवाक्यात्पूर्वेति माधवमतञ्च। अस्या अचलजलस्नानादचलेति संज्ञा। रविसहितरथदानाद्रथसप्तमीति।

"यस्मान्मन्वन्तरस्यादौ रथमाप दिवाकरः।
माघमासस्य सप्तम्यां सा तस्माद्रथसप्तमी॥"

इति हेमाद्रौ मत्स्यपुराणे विशेष उक्तः। अत्रारोग्यव्रतं वर्षपर्यन्तं रामप्रकाशे तत्र नक्तं भोजनम्।

इयं मन्वादिरपि शुक्लपक्षस्थत्वात्पौर्वाह्णिकी।

अ०८–इयं भीष्माष्टमी। अत्र भीष्मतर्पणं श्राद्धञ्चोक्तं निर्णयसिन्धुरामप्रकाशजस्मन्तभास्करभगवन्तभास्करेषु। इयं बुधवारयोगेऽतिप्रशस्तेति दीपिका।

न०९–इयं महानन्दाऽस्यां स्नानदानादि पूर्वाह्णे कार्यम्। व्रतं चेदष्टमीविद्धायाम्। रामप्रकाशेऽप्येवम्।

द०१०–... ... ... ... ...

ए०११-अत्र माघव्रतोद्यापनमुक्तं जस्मन्तभास्करे पाद्मे। इयं भीष्मैकादशुक्ता रामप्रकाशे। कालनिर्णयस्त्वेकादशीतुल्यः।

द्वा० १२—इयं वराहद्वादशी। अत्र सर्वबीजपूरितसौवर्णादि-पात्रे वराहरूपिणं देव संस्थाप्य तच पात्रं कलशोपरि स्थापयित्वा रात्रावेकादश्यां संपूज्योपोष्य जागरणादि कृत्वा द्वादश्यां ब्राह्मणाय दद्यादिति रामप्रकाशे। इयं भीष्मद्वादशी पूर्वयुता युग्मवाक्यादिति निर्णयसिन्धौ।हेमाद्रावप्येवम्। इयं तिलद्वादश्युक्ता निर्णयामृते। अत्र तिलैर्विष्णुपूजनहोमादि कार्यम्। रामप्रकाशेऽप्येवम्।

त्र० १३-इयं कल्पादिः पूर्वाह्णव्यापिनी।

च० १४-अत्रानर्कोदये आरण्टत्याख्योक्ता निर्णयामृते तत्र तिलमोदकदानादि कार्यम्। अनर्कोदये सूर्योदयात्प्राक्कालोऽरुणोदयवेलेति यावत्। रामप्रकाशेऽप्येवम्।

पू० १५-माघीयं परा। इयमेव योगविशेषान्महामाघी।

"मघास्थयोश्च जीवेन्द्वोर्महामाघीति कथ्यते॥"

इति निर्णयसिन्धुजरन्मन्तभास्करस्थहेमाद्रौ ब्राह्मे तत्रैव ज्योतिषे—

"मेषपृष्ठे यदा सौरिः सिंहे च गुरुचन्द्रमाः।
भास्करः श्रवणर्क्षे च महामाघीति सा स्मृता॥"

इति।अत्र मेषपृष्ठे इत्यत्र मेषराशाविति पाठो रामप्रकाशे। सौरिः शनिः। अत्र स्नानदानादेर्महत्फलम्। निर्णयामृतेऽत्र शिवपूजनमधिकमुक्तम्। रामप्रकाशेऽप्येवम्। अत्र कार्पासतिलकम्बलाजिनरत्नमोचकधेनूपानद्दानं सर्वकामदम्।

## फाल्गुनकृष्णपक्षीयप्रतिपदादि-तिथिनिर्णयः ।

प्र० १–... ... ... ... ...
द्वि० २–... ... ... ... ...
तृ० ३–... ... ... ... ...
च० ४–... ... ... ... ...
पं० ५–... ... ... ... ...
प० ६–अत्र योगवशात्पद्मकयोगः तत्र तीर्थविशेषेण स्नानफलमुक्तं ब्राह्मे–

"फाल्गुने कृष्णपक्षे तु रविवारे रवौ घटे ।
गुरुतिष्यां वातभे च ध्रुवयोगे वणिज्यपि ॥
करणे पद्मको योगः सरय्वां तीर्थराजके ।
काश्यां वा पुष्करक्षेत्रे स्नानात्पुण्यं प्रजायते ।
कोटिसूर्यग्रहाधिक्यमन्यक्षेत्रे शताधिकम् ॥" इति ।

सप्तमी७–... ... ... ... ... ...
अ० ८–अत्र सीतोत्पत्तिः ।
नवमी९–.............................
दशमी १०–.............................
एकादशी११–.............................
द्वादशी१२–.............................
त्रयोदशी१३–.............................

च० १४-अत्र शिवरात्रिव्रतं तत्रार्द्धरात्रव्यापिनी चतुर्दशी ग्राह्या तस्य लिङ्गाविर्भावकालत्वादिति सर्वनिबन्धसिद्धान्तः । अर्द्धरात्रस्तु निर्णयसिन्धुमाधवीयमते रात्रिद्वितीययामान्त्यघटिमारभ्य तृतीययामाद्यघट्यन्तः । जस्मन्तभास्करे तु—

"माघकृष्णचतुर्दश्यामादिदेवो महानिशि ।
शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः ॥"

अत्र महानिशीत्यनेन पूर्वार्द्धरात्रोत्तरार्द्धरात्रयोः सन्धिरूपो लघ्वक्षरोच्चारणोपलक्षितः सूक्ष्मकालो गृह्यते । महती चासौ निट् चेति विग्रहबलादर्द्धं निट् चेत्यभिधानात् । "महानिशा तु विज्ञेया मध्यं मध्यमयामयोः।"इतिस्मरणात्।घटीद्वयचतुष्टयमध्यप्रहरद्वयादिपक्षास्तूक्तसन्धिरूपसूक्ष्मकाले पूजनासम्भवात्तत्समीपवर्तिनि तस्मिन्काले पूजादेः साकल्येन निष्पत्त्यौचित्यादित्यर्थसमर्थकाः । यदा पूर्वदिने प्रदोपनिशीथयोश्चतुर्दशी तदा पूर्वा । यदा पूर्वेद्युर्निशीथादूर्ध्वं प्रवृत्ता चतुर्दशी परेद्युःक्षयवशान्निशीथादर्वागेव समाप्ता तदा पूर्वेद्युः, प्रदोषनिशीथव्याप्त्योरुभयोरप्यसम्भवात्परेद्युरुपवासः प्रदोषव्याप्तेः । यदा पूर्वेद्युः प्रदोषादूर्ध्वं प्रवृत्ता चतुर्दशी परेद्युः क्षयवशात्प्रदोषादर्वागेव समाप्ता तदा परेद्युर्व्याप्तिद्वयाभावा-

त्पूर्वेद्युर्निशीथव्याप्तेः सत्त्वात् जयायोगाच्च पूर्वेद्युरेवो-पवासः। अत्रायं विवेकः सम्पन्नः। दिनद्वये निशीथ-व्याप्तौ तदव्याप्तौ च प्रदोषव्याप्तिर्नियामिका, प्रदोष-निशीथविधायकशास्त्रद्वयसाफल्यात्। तथा दिनद्वये प्रदोषव्याप्तौ तदव्याप्तौ निशीथव्याप्तिर्नियामिका एकै-कस्मिन्दिने एकैकव्याप्तौ जयायोगो नियामक इति माधवीये। निर्णयसिन्धुजत्समन्तभास्करभगव-न्तभास्करेष्वप्येवम्। हेमाद्रिमदनरत्नगौडनिब-न्धेषु दिनद्वये निशीथव्याप्तौ पूर्वेति।

"अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत्।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः॥"

इति पाद्मात्।

"महतामपि पापानां दृष्टा वै निष्कृतिः पुरा।
न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं शिवाम्॥"

इति स्कान्दाच्च।

"निशाद्वये चतुर्दश्यां पूर्वा त्याज्या शुभा परा।"

इति कामिकवचनासङ्गतेः।

प्रदोषव्याप्तेराधिक्याच्च। दिनद्वये निशीथव्याप्तौ परेति माधवमतं युक्तं प्रतिभाति। रामप्रकाशेऽप्येवम्। पाद्मादिवाक्यन्तु परदिने महानिशैकदेशव्याप्तिपरम्। अथ च—

"परात्परतरं नास्ति शिवरात्रिव्रतात्परम् ।
न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् ॥
जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः॥"
इति स्कान्दात् ।
"सौरो वा वैष्णवोऽन्यो वा देवतान्तरपूजकः ।
न पूजाफलमाप्नोति शिवरात्रिबहिर्मुखः ॥"
इति पाद्माच्च । सर्वेषामेतद्व्रतकर्त्तव्यतायां आवश्यकत्वेन दिनद्वये निशीथव्याप्तौ परेति माधवादिमतं वैष्णवैः स्वीकार्यम् ।
तथा च—
"माघासिते भूतदिनं हि राज-
न्नुपैति योगं यदि पञ्चदश्या ॥
जयाप्रयुक्तां न तु जातु कुर्या-
च्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥"
इति वचनात् । 'निशाद्वय' इत्यादिकामिकवचनाच्च
वैवंहेमाद्र्यादिमतमित्येवं समाहिते न कश्चिद्विरोधः ।
वृद्धौ क्षये च पूर्वोत्तरकालव्याप्तेर्जयायोगाच्च ॥
अत्र रविसोमभौमवारशिवयोगयोगेऽतिप्राशस्त्यम् ।
अथ पारणम् । अत्र यदा यामत्रयादर्वागेव चतुर्दशी समाप्यते तदा तिथ्यन्ते पारणम्, यदा चतुर्दशी यामत्रयमतिक्रामति तदा चतुर्दशीमध्ये पूर्वाह्णे पारणमिति हेमाद्रिमाधवमतम् । कमलाकरस्तु सर्वप्रकारेषु

तिथिमध्य एव पारणेति ब्रूते । अलाभे तु चतुर्दश्या अमायामेव पारणमुक्तं जस्मन्तभास्करस्थतिथितत्त्वे 'शिवे' त्यादिवचनात् । शेषमत्र निबन्धेभ्योऽवगन्तव्यम् ।

अ०३०-इयममा युगादिर्मन्वादिश्चाऽपराह्णव्यापिनी जस्मन्तभास्करे । इयं च कुम्भादित्यशतर्क्षयोगाद्वारुणी। अत्र दत्तं तिलान्नं पितृणां वर्षायुतं तृप्तिकरम् । अत्रैव प्रदोषव्यापिन्यां शिवपूजा चोक्ता रामप्रकाशे।

## फाल्गुनशुक्लपक्षीयप्रतिपदादितिथिनिर्णयः

प्र०१—... ... ... ... ...

द्वि०२—अत्र छागदर्शनं फुलहा चोदयव्यापिन्याम् ।

तृ०३—... ... ... ... ...

च०४—अत्र मासचतुष्टयसाध्यं वैनायकव्रतमुक्तं निर्णयामृते। तच्च नक्तव्यापि तृतीयाविद्धम् ।

पञ्च०५— ... ... ... ...

षष्ठी६—... ... ... ... ...

स०७—अत्र कामदसप्तमीव्रतमुक्तं रामप्रकाशे भविष्योत्तरे-तत्रोपवासः सूर्यपूजाऽहर्निशं तदुत्कीर्त्तनं प्रातरष्टम्यां पुनः सूर्यपूजनं होमदानादि च ।

न०८—अत्र निर्णयामृते लक्ष्मीपूजा दीपदानं चोक्तं प्रदोपसमये। रामप्रकाशेऽप्येवम् ।

नवमी९—... ... ... ... ... ... ... ... ...

दशमी१०— ... ... ... ... ... ... ... ...

ए०११-आमलक्येकादशीयं भविष्योत्तरे—

"फाल्गुने मासि शुक्लायामेकादश्यां जनार्दनः ।
वसत्यामलकीवृक्षे लक्ष्म्या सह जगत्पतिः ॥
ततः सम्पूजयेद्देवं शक्त्या कुर्यात्प्रदक्षिणम् ॥"

द्वा०१२-अत्र पुष्यनक्षत्रबुधवारयोगे गोविन्दद्वादशी पापापहा । तथा च गौडग्रन्थे—

"फाल्गुने शुक्लपक्षे तु पुष्यर्क्षे द्वादशी बुधे ।
गोविन्दद्वादशी नाम महापातकनाशिनी॥" इति ।

अत्र गङ्गास्नाने मन्त्रः पद्मपुराणे ।

"महापातकसंज्ञानि यानि पापानि सन्ति मे ।
गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि ॥"

पुराणान्तरेऽत्र विशेष उक्तः—

"यदा चापे जीवो भवति घटराशौ दिनमणि—
र्यदा तारानाथः स्वभवनगतः फाल्गुनसिते ॥
यदार्को द्वादश्यां गुरुभसहितः शोभनयुत—
स्तदा गोविन्दाख्यो हरिदिवस एषोऽतिसुभगः ॥"

इति । इयं योगवशान्निर्णेया। अर्को रविवारः । गुरुभं पुष्यः । निर्णयामृते चेयं नृसिंहद्वादशी । तत्रैकादश्यामुपवासो द्वादश्यां प्रतिमादानम्। इयमेवामलकी। अत्रामलकवृक्षविष्णुपूजोपवासः द्वादश्यां विप्रभोजनादि । रामप्रकाशेऽप्येवम् ।

त्रयोदशी १३-... ... ... ... ...
चतुर्दशी १४-... .... ... ... ...
पू० १५-अत्र दोलोत्सव उक्तो जस्मन्तभास्करे ब्राह्मे-
"नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् ।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥"
इति । तत्रेयं पूर्वाह्णव्यापिनी परा ।
"पूर्णिमाप्रतिपत्सन्धौ दोलयेन्मधुसूदनम् ।"
इति रामप्रकाशस्थस्कान्दात् । इयं मन्वादिः । पूर्वाह्णव्यापिनी स्नानादौ परा उपवासे पूर्वा अत्रैव होलिका । सा च सायाह्नव्यापिनी ग्राह्या ।
"सायाह्ने होलिकां कुर्यात्पूर्वाह्णे क्रीडनं गवाम् ॥"
इति वचनादिति निर्णयामृत उक्तम् । ज्योतिर्निबन्धे तु-
"प्रतिपद्भूतभद्रासु यार्चिता होलिका दिवा ।
संवत्सरं च तद्राष्ट्रं पुरं दहति साद्भुतम् ॥
प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा ।
तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे ॥"
इति नारदवचनात्प्रदोषव्यापिनीत्युक्तम् । हेमाद्रौ मदनरत्ने च भविष्ये । "अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे" इत्यादिना तत्रैव तद्विधानाच्च । तेनेयं पूर्वविद्धा 'श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धैव' त्यादिबृहद्यमब्रह्मवैवर्तोक्तेः ।

दिनद्वये प्रदोषव्याप्तौ परैव पूर्वदिने भद्रासत्त्वात्, तत्र च होलिकानिषेधात् । तदुक्तं निर्णयामृते मदनरत्ने च पुराणसमुच्चये—

"भद्रायां दीपिता होला राष्ट्रभङ्गं करोति वै ।
नगरस्य च नैवेष्टा तस्मात्तां परिवर्जयेत् ॥"

तथा—

"भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ।
श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी ॥"

तथा—

"दिनार्द्धात्परतोऽपि स्यात्फाल्गुनी पूर्णिमा यदि ।
रात्रौ भद्रावसाने तु होलिका दीप्यते तदा ॥"

इति।यदा तु पूर्वदिने चतुर्दशी प्रदोषव्यापिनी परदिने च पूर्णिमा क्षयवशात्सायाह्नात्प्रागेव समाप्यते तदा पूर्व-दिने संपूर्णरात्रौ भद्रासत्त्वात्तत्र च तन्निषेधात्परेहनि प्रतिपद्येव कुर्यात् ।

"सार्द्धयामत्रयं वा स्याद्द्वितीयदिवसे यदा ।
प्रतिपद्वर्द्धमाना तु तदा सा होलिका स्मृता ॥"

इति भविष्यवचनादिति निर्णयामृतमदनरत्नज-स्मन्तभास्करभगवन्तभास्कराः । अन्ये तु तस्यां भद्रामुखं त्यक्त्वेति—

"प्रदोषव्यापिनी न स्याद्यदा पूर्वदिने तदा ।

भद्रामुखं वर्जयित्वा होलिकायाःप्रदीपनम् ॥"

इति नारदवचनात्,

"निशागमे प्रपूज्येत होलिका सर्वदा बुधैः ।
न दिवा पूजयेद्ढुण्ढां पूजिता दुःखदा भवेत् ॥"

इति दिवोदासीये वचनात्,

"यामत्रयोर्ध्वयुक्ता चेत्प्रतिपत्तु भवेत्तिथिः ।
भद्रामुखं परित्यज्य कार्या होला मनीषिभिः ॥"

इति विद्याविनोदेऽभिधानाच्च, भद्रामुखं विहाय पूर्वदिन एव कार्येत्याहुः।भद्रामुखं तु।'नाड्यस्तु पञ्चवदनगलकस्तथैक' इति रत्नमालोक्तं ज्ञेयम्।शिष्टाचारोऽप्येवमेवेति निर्णयसिन्धुः । अत्रास्मिन्मीमांसितमेतत् निर्णयामृतादयः, 'सार्द्धयामत्रयं वा स्या-दि'त्यादिभविष्यवचनमात्रमवलम्ब्य होलिकां परां मानयंतो न मान्यास्तत्प्रदर्शितपद्धतौ गर्तद्वयसत्त्वात्। किन्तद्गर्तद्वयमित्याकांक्षायामाह 'न दिवा पूजयेद्ढुण्ढामि' त्यादिदिवोदासवचनकुद्दालखनितो दिवानिषेधरूप एकः 'वह्नौ वह्निं परित्यजेदि' त्यादिभविष्यवचनावदारितः प्रतिपन्निषेधरूपो द्वितीयः । ननु हेमाद्रिदिवोदासनिर्णयसारगौडनिबन्धकालनिर्णयदीपिकादर्शिते पथ्यपि भद्रारूपो महागर्तोऽस्त्येव । सत्यम् ।

"पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि वा ।

तानि सर्वाणि सिध्यंति विष्टिपुच्छे न संशयः ॥"
इति ज्योतिर्लल्लोक्तेः ।
"भद्रामुखं वर्जयित्वा होलिकायाः प्रदीपनम् ।"
इति देवर्षिनारदवचनस्य च तत्र सोपानतया सत्त्वेन तदुल्लङ्घनपाताच्च भेतव्यमिति । न च 'सार्द्ध-यामत्रयं वा स्यादि'ति वचनात्सार्द्धयामत्रयात्मिकायां पूर्णिमायां प्रतिपद्वृद्धेः प्रक्षेपेण सायं पूर्णिमैव, सत्ये-वमुक्तगतिद्वयोत्तरगतायास्तु तस्या दिवानुष्ठेयबहुकाल-साध्यकुलधर्महोलोत्सवगोक्रीडादिविषयकत्वात् ।
कमलाकरोपि निर्णयसिन्धौ निर्णयामृतादिमतं पूर्वं प्रदर्श्य पूर्वविद्धाविधायकवचनान्ते शिष्टाचारो-प्येवमेवेति लिखन्हेमाद्र्यादिमतं सम्मनुत इति प्रतीमः।
अत्र चेच्चन्द्रग्रहणं तदा ततोर्वाङ्निशि भद्रावर्जपूर्णि-मायां होलिकादीपनम् । अथ परेह्नि ग्रस्तोदयस्तदा पूर्वदिने भद्रावर्जरात्रिचतुर्थयामे विष्टिपुच्छे वा होला कार्या । ग्रहोत्तरं प्रतिपत्सत्त्वात्तत्पूर्वञ्च दिवा-होलानिषेधादिति दिवोदासचन्द्रप्रकाशो ।
वस्तुतस्तु परदिने प्रदोषे पूर्णिमासत्त्वे कर्मकालस्प-र्शे चतुर्थयामादिगौणकालग्रहणे मानाभावाद्भद्राभा-वाच्च ग्रहणकाल एव होलिका कार्येति निर्णयसिन्धुः।
फाल्गुनस्याधिकत्वे शुद्ध एव होला कार्या ।

## चैत्रकृष्णपक्षीयप्रतिपदादितिथिनिर्णयः ।

प्र० १—अत्र वसन्तोत्सवस्तत्रौदयिकी ग्राह्या । 'प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ।'इति भविष्योक्तेः। दिनद्वये तथात्वे पूर्वा—

"वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः ॥"

इति वृद्धवशिष्ठोक्तेः।अत्र विशेषो हेमाद्रौभविष्ये—

"चैत्रे मासि महाबाहो पुण्ये तु प्रतिपद्दिने ।
यस्तत्र श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः ॥
न तस्य दुरितं किञ्चिन्नाधयो व्याधयो नृप ॥"

इति । तथा—

"प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ ।
कृत्वा चावश्यकार्याणि सन्तर्प्य पितृदेवताः ॥
वन्दयेद्धोलिकाभूतिं सर्वदुःखोपशान्तये ॥"

मन्त्रश्च—

"वन्दितासि सुरेन्द्रेण ब्रह्मणा शङ्करेण च ।
अतस्त्वं पाहि नो देवि विभूतिर्भूतिदा भव ॥"

इति । अत्र तैलाभ्यङ्गो नित्यः—

"वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
तैलाभ्यङ्गमकुर्वाणो निरयं प्रतिपद्यते ॥"

इति वृद्धवशिष्ठोक्तेः ।

"नृत्यगीतविनोदैश्च कुर्यात्काममहोत्सवम् ।
एवं कुर्वन्नवाप्नोति यावत्संवत्सरं सुखम् ॥
दिव्यं नीराजनं तद्धि सर्वरोगविनाशनम्॥"
इति । तथा–
"गोमहिष्यादि यत्किञ्चित्तत्सर्वं भूषयेन्नृप ।"
इति । अत्र चूतकुसुमप्राशनं पुराणसमुच्चये उक्तम् ।
"वृत्ते तु वारसमयेऽसितपञ्चदश्यां
प्रातर्वसन्तसमये समुपस्थिते च ।
संप्राश्य चूतकुसुमं सह चन्दनेन
सत्यं हि पार्थ पुरुषोऽथ समाः सुखी स्यात् ॥"
इति । मन्त्रस्तु–
"चूतमग्र्यं वसन्तस्य माकन्द कुसुमं तव ।
सचन्दनं पिबाम्यद्य सर्वकामार्थसिद्धये ॥"
इति हेमाद्रिमाधवनिर्णयसिन्धुजस्मन्तभास्कर-
मतम् । निर्णयामृतरामप्रकाशयोरप्येवम् ।

टि०२–अत्रोदयव्यापिन्यां राज्ञो नृत्यगीताद्युत्सव उक्तो
भगवन्तभास्करजस्मन्तभास्करयोर्भविष्ये ।
"ततः प्रातर्द्वितीयायां पुत्रमित्रादिसंयुतम् ।
उपविश्यासने रम्ये पौरजानपदैः सह॥"
इति ।

तृ०३—... ... ... ... ...

च०४—इयं गणेशव्रते चन्द्रोदयव्यापिनी । उभयदिने तत्सत्त्वेऽसत्त्वे वा पूर्वा निर्णयसिन्धौ मदनरत्ने च दीपिकायाम्। माधवीयेऽत्र मध्याह्नकाल उक्तः। स च सिद्धविनायकव्रतविषयः । तत्रापि एकैकव्याप्तौ कर्मकालनिर्णयः । उभयदिने तत्सत्त्वे पूर्वा, उभयदिने तदसत्त्वे विनायकव्रते पूर्वान्यत्र परे ति ।

पं०५—इयं रङ्गपञ्चमी पूर्वाह्णव्यापिनी ग्राह्या ।

प०६—... ... ... ... ...

स०७—... ... ... ... ...

अ०८—इयं कालाष्टमी व्रते सायंकालव्यापिनी ग्राह्या 'कृष्णाष्टमी' इत्यादिनारदीयात् । उभयदिने तत्सत्त्वे पूर्वा 'अष्टमी कृष्णपक्षे च कृष्णपक्षे चतुर्दशी । पूर्वविद्धैव कर्त्तव्या' इत्यादिवचनात्। शीतलापूजनादौ पूर्वाह्णव्यापिनी नवमीयुता 'रन्ध्रयोरि'ति युग्मवाक्यात् 'अष्टमी नवमीविद्धे'त्यादिकालनिर्णयस्थब्रह्मपुराणवचनाच्च। क्षये पूर्वा 'परेह्नि नास्ति चेत्पूर्वविद्धा' इत्यादिवचनात् वृद्धावपि पूर्वा सम्पूर्णत्वात् । माधवनिर्णयामृतदुर्गावतीप्रकाशजस्मन्तभास्करा अप्येवम् । अत आरभ्याषाढकृष्णाष्टम्यन्तासु चतसृष्वपि तिथिषु

अयमेव निर्णयः । सप्तम्या वृद्धावपि नवमीयुता ग्राह्या उक्तवचनाभ्याम् ।

न०९—... ... ... ... ...

द०१०-... ... ... ... ...

ए०११-... ... ... ... ...

द्वा०१२-... ... ... ... ...

त्र०१३-इयं योगवशाद्वारुणी महावारुणी महामहावारुणीति। अत्र गङ्गास्नानान्महाफलमुक्तं जस्मन्तभास्करे ब्रह्माण्डे—

"वारुणेन समायुक्ता मधौ कृष्णत्रयोदशी ।
गङ्गायां यदि लभ्येत शतसूर्यग्रहैः समा ॥"

इति । वारुणं शततारा । जस्मन्तभास्करमैथिलनिबन्धे तु शनिवारयोगे महावारुणी शुभयोगसाहित्ये महामहावारुणीत्युक्तम् । तथा च तत्रैव—

"शनिवारसमायुक्ता सा महावारुणी स्मृता ।
गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा ॥
शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥"

इति। रामप्रकाशे रात्रौ तादशयोगे स्नानं नेत्युक्तम्।
अत्र शिवसन्निधौ गङ्गास्नानात्प्रेतो न जायते त्रयो-
दयव्यापिनी। सरस्वतीस्तोत्रपाठादावपीति 'चैत्रकृष्ण-
त्रयोदश्यामि' त्यादिभविष्यवचनात्। इयं शिवव्रते
प्रदोषव्यापिनी। दिनद्वये तत्सत्त्वेऽसत्त्वे वा पूर्वा राम-
प्रकाशे।

"त्रयोदशी तु कर्त्तव्या द्वादशीसहिता मुने।"

इति माधवीयनिर्णयसिन्धुजस्मन्तभास्करेषु।
दिनद्वये तत्सत्त्वे क्षये च शुक्लपक्षे पूर्वा। दिनद्वये
तत्सत्त्वे कृष्णपक्षे परेति। अत्र शनिसोमवारयोगेऽ-
तिप्रशस्तेयम्।

च०१४-अत्र काममहोत्सव उक्तो देवीपुराणे-

"चैत्रकृष्णचतुर्दश्यां चरेत्काममहोत्सवम्॥
जुगुप्सितोक्तिभिस्तत्र गीतवाद्यादिभिर्नृणाम्।
भगवांस्तुष्यते कामः पुत्रपौत्रसमृद्धिदः॥"

इति। अत्रैव शिवसन्निधौ गङ्गास्नानात्प्रेतत्वानवाप्तिः
'चैत्रकृष्णे'त्यादिवचनात्। अत्रभौमवारसत्त्वेऽतिप्राश-
स्त्यमत्र पूर्वाह्णव्यापिनी ग्राह्या। उभयत्र तत्त्वे क्षये च
पूर्वेति दीपिकामाधवीययोः।रामप्रकाशेऽप्येवम्।

अ०३०-अमेयं मन्वादिरपराह्णव्यापिनी ग्राह्या।

"पूर्वाह्णे तु सदा ग्राह्याः शुक्ला मनुयुगादयः।

दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकी॥"

इति गालवोक्तेः।किञ्च सर्वमासीयामासु सोमवारसत्त्वे स्नानादेः सूर्यग्रहणसमं फलमुक्तं रामप्रकाशे शङ्खेन। चतुर्दशीयुक्ताप्यमा सोमवारयुता ग्राह्या।

"सिनीवाली कुहूर्वापि यदि सोमदिने भवेत्।
गोसहस्रफलं दद्यात्स्नानं यन्मौनिना कृतम्॥"

इति रामप्रकाशे व्यासोक्तेः। अत्र भौमवारयोगेनापि मौनिनाऽत्रारुणोदयमारभ्य स्नानकालपर्यन्तं भाव्यम्। रामप्रकाशे गौडग्रन्थधृतस्मृतेररुणोदये करतोयाजलस्नानात्सूर्यग्रहणशतस्नानजं फलं भवति॥

एवं निरूपितमिदं गहनं तु काल-
तत्त्वं विचार्य वचनैश्च नयैश्च सम्यक्।
तद्दोषदृष्टिमपहाय विवेचनीयं
विद्वद्भिरित्यविरतं भणतोऽस्मि तेषु॥ १॥

मरीचिरासीत्परमेष्ठिसूनुस्तस्यात्मजः कश्यपनामधेयः॥
तदङ्गजातो मुनिकाश्यपाख्यस्तदन्ववाये बुधदेवशर्मा २

श्रीदेवशर्मवंशे द्विवेदविद्योगिराजोभूव।
तद्वेदसूनुवर्यो लक्ष्मणपूर्वः प्रसादार्यः॥ ३॥

सुधीमतस्ततो जातः कृष्णचन्द्रः सुधीमतः ।
यद्विद्यादानमालक्ष्य विधू यन्नामनि स्थितौ ॥ ४ ॥
जातेन कृष्णचन्द्राद्भैरवदत्तेन रुक्मिण्याम् ।
दीव्यादिष्टकृपातः कृतोऽनिशं धर्मदीपोयम् ॥ ५ ॥
इति श्रीष्टिकाप्रस्थपुरवास्तव्यद्विवेदोपनामककृष्णचन्द्रशर्मसूनुरुक्मिणीगर्भजभैरवदत्तशर्म्मसमुद्द्योतितो धर्मप्रदीपः सम्पूर्णः ।

इदं पुस्तकं क्षेमराजश्रीकृष्णदासश्रेष्ठिना गोविन्दशास्त्रिद्वारा सम्यक्परिशोध्य मुम्बय्यां स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रालये मुद्रयित्वा प्रकाशितम् ।

पुस्तक मिलनेका ठिकाना—
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" छापाखाना खेतवाड़ी—बम्बई.



# विक्रय्यपुस्तकोंकी संक्षिप्त-सूची।

## धर्मशास्त्रग्रंथाः ।

| नाम. | की.—रु.—आ. |
|---|---|
| मनुस्मृति सटीक कुल्लूकभट्टकृत संस्कृत टीका सहित जिल्दबँधी ... ... ... | २—० |
| मनुस्मृति सान्वय भाषाटीका ग्लेज ... ... | २—८ |
| तथा रफ् ... ... ... ... ... | २—० |
| व्रतराज अतिउत्तम टिप्पणीसहित जिसमें वर्षभर की सर्वतिथियोंके व्रत उद्यापन निर्णय कथा हैं | ४—० |
| व्रतराजटिप्पणीसहित रफ् ... ... ... | ३—० |
| निर्णयामृत ( अनेक प्राचीन ग्रंथोंसे शुद्धहुवा है | १—१२ |
| याज्ञवल्क्यस्मृति मिताक्षरा पं० मिहिरचंदकृत पद, योजना,भावार्थ और तात्पर्यार्थटिप्पणी तथा भाषाटीकासहित ... ... ... | ५—० |
| निर्णयसिंधु टिप्पणीसहित अत्युत्तम ... ... | ३—० |
| तथा रफ्कागज ... ... ... ... | २—८ |
| अष्टादशस्मृति उत्तम शुद्ध मोटा अक्षर ... | २—० |
| विवादार्णवसेतु ( धर्मशास्त्र व न्याय राजनीति ) | २—० |
| बृहत्पाराशरीस्मृति. ( धर्मशास्त्र ) ... ... | १—० |
| पाराशरीस्मृतिका उत्तरखंड... ... ... | ०—४ |

| नाम. | की.—रु.—आ. |
|---|---|
| आचारादर्श ... ... ... ... | ०—१२ |
| श्राद्धविवेक ( इसमें सब श्राद्धोंकी विधिहैं )... | ०—१२ |
| प्रतिष्ठामयूख ... ... ... ... | ०—६ |
| आशौचनिर्णय भाषाटीका ... ... ... | ०—४ |
| सनातनधर्मदीपक भाषा ( उदाहरणों समेत सनातन धर्ममण्डन ) ... ... ... | ०—८ |
| मातृकाविलास ( अकारसे लेकर सर्व अक्षरमात्रोंका अर्थ और तिनसे विस्ताराकर बने हुए अनेकप्रकारके वाणीमयसर्व मंत्र शास्त्र, व्याकरणशास्त्र, संगीतशास्त्र, नीतिशास्त्र, राजनीतिशास्त्र, धनुर्वेदशास्त्र, युद्धवर्णन आदि अनेक २ शास्त्रोंका स्वरूप वर्णित है... ... ... ... ... | २—८ |
| श्राद्धप्रकाश ( सब श्राद्धोंकी पद्धतियां हैं ... | ३—० |
| शान्तिप्रकाश ( समंत्रक अनेक प्रकारकी शांति पद्धतियां एकत्रित हैं ) ... ... ... | १—४ |

कर्मकाण्ड ग्रंथाः ।

| | |
|---|---|
| संस्कारभास्कर ( यजुर्वेदी सब संस्कारोंकी विधि प्रयोग और मंत्र सहित )... ... ... | २—१२ |
| जन्मदिनपूजापद्धति ... ... ... ... | ०—२ |

| नाम. | की.—रु.—आ. |
|---|---|
| यज्ञोपवीत मूल ... ... ... ... | ०—२ |
| तथा भाषाटीका ... ... ... ... | ०—८ |
| नवरत्नविवाहपद्धति भाषाटीकासह ... ... | १—४ |
| वैवाहपद्यावली ( गोतनी अर्थात् विनतीमें कहने योग्य दोनों पक्षके श्लोक भाषाटीका ... | ०—१२ |
| ज्येष्ठाशांति ... ... ... ... ... | ०—१॥ |
| पञ्चकशांति ... ... ... ... ... | ०—२ |
| नवग्रहविधानपद्धति ... ... ... ... | ०—४ |
| जलोत्सर्गप्रकाश वापी, कूप, तडागादिका उ० | १—१२ |
| तुलसीविवाहपद्धति ... ... ... ... | ०—२ |
| शूद्रविवाहपद्धति ... ... ... ... | ०—२ |
| अन्त्येष्टिपद्धति—यजुर्वेदीय प्रेतकृत्यका अत्यन्त उपयोगी ग्रन्थ ... ... ... ... | २—० |
| शूद्रश्राद्धपद्धति ... ... ... ... | ०—६ |
| पार्वणश्राद्धपद्धतिभाषाटीका... ... ... | ०—४ |
| एकोद्दिष्टश्राद्धपद्धति भाषाटीका ... ... | ०—३ |
| नवग्रहकाण्डी ( नित्यपूजाविधानपद्धति ) ... | ०—२ |
| परदगणेशपूजा ... ... ... ... | ०—१॥ |
| वृद्धिश्राद्ध ( नान्दीमुख ) ... ... ... | ०—४ |
| संध्यायजुर्वेदी मूल १॥ आ० और भाषाटीका | ०—१॥ |